BIBLIOTHECA INDICA

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1198.

# HĀRALATĀ

BY

ANIRUDDHA BHATTA

EDITED BY

PANḌIT KAMALAKṚIṢṆA SMṚITITIRTHA

CALCUTTA:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET.

1909.

# PREFACE.

The 'Haralata' by Aniruddha Bhatta is a short treatise on Smriti ( ordinances ) and treats mainly of अशौचव्यवस्था.

Though a small one, this treatise has the rare merit of being at once to the point in a pithy and concise way peculiar to its own. The manner in which different opinions have been collaborated and the very sound reasonings brought to bear upon the statements betray a colossal learning and keen insight of the author. Though no other book by this author has yet come to light, compilation of the 'Haralata' alone has assigned to him a very lofty place among the first rate compilers of this class.

The following 'Sloka' occurs at the end of the book :—

सुरापगातीरविहारपट्टके निवासिना भट्टनयार्थवेदिना ।
कृतानिरुद्धेन सतामुरःस्थले विराजतां हारलतेयमर्पिता ॥

इति चाम्पाहट्टीय महोपाध्याय धर्म्माध्यक्ष श्रीमदनिरुद्धविरचिता
हारलता समाप्ता ।

From this it appears that Aniruddha Bhatta was a settler of Shastric disputes, an authority on the sacred lore, a Barendra Brahmana of the Champahatti **Gain* ( order ) and lived at Beharpattaka on the Ganges.

To determine the age of his existence we find his name mentioned in the book Danasagara by Ballal Sen as the latter's spiritual guide.

---

* This *Gain* is still extant among the Barendra Brahmanas.

वेदार्थस्मृतिसंग्रहादिपुरुषः श्लाघ्यो वरेन्द्रीतले

... ... ... ... ...

... ... ... ... ...

हलारेरिव गीष्पतिर्नरपतेरस्यान्निरुद्धो गुरुः ।

According to the 'Aini Akbari' by AbulFazl, Ballal Sen lived in the eleventh century ; and our author, being contemporaneous with him, must have flourished in that century. That he lived at a time prior to the sixteenth century is corroborated by the fact that Bachaspati Misra and Raghunandan Bhattacharya, Smriti compilers of the sixteenth century, have quoted him freely as an authority.

In editing this book I have collated the manuscripts क, ख, ग, घ, ङ ; the first three belonging to the library of the Sanskrit College, Calcutta, the fourth to Pundit Benode Vehari Smrititirtha of Dandirhat and the fifth to Pandit Gurucharan Vidyabhusan of Bali ; of these five manuscripts the second and fourth appear to be correct. And among the works consulted are the ParaskarGrihyaSutra, the KatyayanParisista, the BarahaPurana and the Suddhitatta by Raghunandan Bhattachary.

I here take the opportunity of thanking the Asiatic Society of Bengal for kindly permitting me to edit this treatise on Smriti which, though useful, has since been a sealed book to the educated many.

Bhatpara,
The 23rd of January, } KAMALKRISHNA SMRITITIRTHA.
1909.

# अथ विषयसूची।



ऋषिनामानि—

जावालः ६,११।२२,२।२४,१०।२५,४।३७,१५।५८,१४।६८,१४।
८१,१४।१०६,१५।११६,३ ।

दक्षः ५,३।८,१२।१४,६।५४,२ ।

देवलः २,८।७,१८।१८,१३।११,१२।१४,१,१६।३३,१५।३६,४।
६०,१८।६१,१८।६४,१७।६७,११।१२४,८।१८५,३ ।

नारदः ३,१३ ।

पराशरः ५,८।८,१८।१०,१४।१७,१०।८७,८।८८,१।८४,१।१०३,
२१।११०,३।११२,३।११६,१०।१२१,७।२०३,७ ।

पारस्करः ६,१८।८,१।२३,१८।२४,१८।४०,१३।१२४,१६।१४८,
१३।१५५,१५।१६२,१५।१७१,८ ।

पैठीनसिः ११,१७।२०,१७।४०,४।८७,१२।१४७,३।१८५,८ ।

प्रचेताः २०,१३।८१,४।१४५,१।१४८,२१।१६३,१४।१७५,१ ।

बृहस्पतिः ३,८।५,१६।१६,१६।३४,५।५४,१३।६०,१२।७४,२।
८१,१७।८४,१।१०२,११,१५।१५८,७।२१३,८ ।

बृहत्प्रचेताः १६६,७ ।

बृहद्गार्ग्यः ११६,१५ ।

बृहत्प्रचेताः १७१,१५ ।

बैजवापः १५५,५ ।

बोधायनः ६२,१७।८०,१२।१४८,३।१५६,२० ।

भरद्वाजः १७४,१ ।

मनुः १,५।३,१५।४,१४।७,४।८,१०।१०,१८।१५,१३।२५,१२।३२,
४।३३,१२।४८,२।५०,११।५२,१५।६१,२।६८,२।७५,१७।

७६,७। ८२,१५।८६,३।८६,२।११०,१८।१११,१४।११६,७।
१२०,१।१२१,१८।१५७,१४।१६४,१४।२०१,६।२०२,१०।

मरीचिः ३०,१३।७०,१,१६।१६०,३।१६८,१।

मार्कण्डेयः १६,१०।२६,१०।

यमः ६,११।२६,६।३६,११।६४,१।६६,३।१११,५।११२,२२।१२०,
१८।१३१,१२।१३५,२०।१४७,१।२०३,१।

याज्ञवल्क्यः ३७,२।३८,१३।४३,७।४६,१२।५०,११।७१,१६।८७,
१।१०२,१३।१०६,८।१२३,१५।१४२,३।१५१,१।१५२,२।
१५४,२।१६१,२।२००,१५।

वसिष्ठः ४०,८।८६,१०।६८,१।१३६,१७।१५७,३।२०२,३।

विष्णुः ४,७।३४,६। ५०,३। ५५,६।५७,१२।६०,५।६२,६।७७,११।
८२,१२।८३,१५।६५,८। १०५,१२। १२०,१३। १५३,१३।
१६३,५।१६८,११।२०,३,११।२१२,११।

व्यासः ८,७।१२,१०।१८,६।४४,६।५३,६।११७,१६।२०८,८।

लघुहारीतः ४४,२।६२,१।६७,१३।

शङ्खः २६,१६।३५,१६।४१,८।४८,१।६५,११।७०,१५।६६,१५।
१३१,६।१७५,१६।

शङ्खधरः ११७,११।

शङ्खलिखितौ ७,६।१७,१७।२८,५।३६,४।४६,१६।५०,११।८१,६।
६६,११।१०४,११।११३,७।१४७,६।१५०,१६।१५४,१४।

शातातपः ११,१४।१७०,१६।

शुनःपुच्छः १६६,४।

संग्रहकारनामानि।



पुराणनामानि।

अन्यान्यग्रन्थनामानि ।

अ

म

## शुद्धिपत्रम् ।



| पृः | पं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४६ | १७ | द्विजम्मनाम् | द्विजन्मनाम् |
| ५२ | ४ | गृह्णामि | गृभ्नामि |
| ६१ | ५ | जम्म | जन्म |
| ७३ | ५ | खणित्वा | खनित्वा |
| ७५ | १९ | शुश्रुषकत्वात् | शुश्रूषकत्वात् |
| ८१ | ५ | मातृस्वसृ श्वश्रु | मातृष्वसृ-श्वश्रू |
| ८९ | २ | वैश्वस्य | वैश्यस्य |
| ९१ | ५ | शवासु | शवानु |
| ९१ | १६ | -जम्मनाम् | -जन्मनाम् |
| ९४ | ५ | चालणेन | चालनेन |
| ९९ | ८ | एमं | एवं |
| १०६ | १० | ग्रहितुः | ग्रहीतुः |
| १०८ | ६ | -ग्रहित्रोः | -ग्रहीत्रोः |
| १२३ | १३ | उनेति | ऊनेति |
| १२४, १२५ | १८, ८ | तुष्णीं | तूष्णीं |
| १२६, १२७ | २, ५ | मृणमयानि | मृन्मयानि |

| पृः | पं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३८ १३९ | ११ १२ | जुह्रयात् | जुहुयात् |
| १४० | २१ | तुष्णीं गन्ध्यादि | तूष्णीं गन्धादि |
| १४० | ५ | पार्णाणि | पार्णानि |

ॐ गणेशाय नमः ।

# हारलता ।

ओं नमो विष्णवे ।

प्रणम्य पुण्डरीकाक्षं पूर्व्वाचार्य्यप्रवर्त्तिता[1] ।
व्याख्या मन्वादिशास्त्राणां समालोच्य विविच्यते ॥
विशुद्धिरनिरुद्धेन स्वबोधविभवावधि ।
बोधार्थमल्पबुद्धीनां[2] प्रबुद्धानाञ्च तुष्टये ॥

मनुः—

[3]दन्तजातेऽनुजाते च कृतचूड़े च संस्थिते ।
अशुद्धा बान्धवाः सर्व्वे सूतके च तथोच्यते ॥

जातदन्तादनु पश्चाज्जातोऽनुजातोऽजातदन्त इत्यर्थः । कृतचूड़े चेति चकारात् कृतोपनयने[4] च, संस्थिते मृते । अत्र[5] मरणाशौचस्य पृथग्ग्रहणात् सूतके चेति जननाशौचपरम्[6] ।

यत्र तु मरणाशौचग्रहणं पृथक् नास्ति यथा—"सूतके कर्म्मणां त्यागः" सूतके च प्रवासे चेति—तत्रोभयाशौचग्रहणम् ।

---

(१) ख प्रकीर्त्तिता ।
(२) क -बोधानां प्रबुद्धानाञ्च ।
(३) क दन्ते जाते । ग जातदन्ते ।
(४) ख अकृतोपनयने च ।
(५) क तत्र ।
(६) ग जननाशौचार्थं ।

यतो विदेशस्थतस्य साग्नेरस्थ्नामलाभे पलाशपत्रकृतपुरुष-दाहानन्तरं "ततः प्रभृति सूतकम्" इति छन्दोगपरिशिष्टकृता केवलमरणाशौचे सूतकपदं प्रयुक्तम्।

बान्धवाः सर्व्वे इति सर्व्वग्रहणात्[१] न केवलं सपिण्डानामेवा-शौचं[२] किन्तु समानोदक-सगोत्र-मातृबन्धु-पितृबन्धुप्रभृतीनामपि।

एवञ्च सति यथाकथञ्चित्सम्बन्धेनाप्यशौचविधानात् अध्या-पनाध्ययनसहवासादिभिरप्यशौचं सूचितम्।

अतएवाह देवलः—

जनने मरणे नित्यमाशुच्यमनुधावति।
[३]सपिण्डान् मातृबन्धूंश्च यत्र क्वचन गच्छतः॥
योनि-ज्ञाति-द्विजेष्विष्टमाशुच्यं सहवासिषु।
भर्त्तृगुर्व्वोरशौचं स्यात् मृत्युप्रसवकारणम्॥
कारणाद्गच्छति प्रेष्यं तदाशुच्यं न तान् व्रजेत्॥

अत्र मातृबन्धु-योनिद्विज-सहवासि-गुरुषु मरणाशौचमनु-सम्बन्धनीयं[४] योग्यत्वात् मृत्युप्रसवकारणमशौचं प्रैष्यं गच्छतीति सम्बन्धः।

यत्र क्वचनेति देशान्तरगतानामप्यशौचं दर्शयति,[५] योनि-

---

(१) क सर्व्वशब्दार्थात्।
(२) ख न सपिण्डानामशौचं।
(३) ख अपि तान् मातृबन्धूंश्च। क -कृतबन्धूंश्च।
(४) क ग -सम्बानीयं।
(५) क कं प्रयाति।

ज्ञातिद्विजेष्वित्यत्र द्विजशब्दः प्रत्येकमभिसम्बध्यते योनिद्विजा योनिसम्बन्धिनः[1] पितृस्वस्रेय-मातृस्वस्रेय-भागिनेयादयः। ज्ञाति-द्विजाः समानोदकाः सगोत्राश्च। भर्त्तृगुर्व्वोरिति भर्त्तृसम्बन्ध्यशौचं प्रेष्याणां गुरुसम्बन्ध्यशौचं शिष्याणाम्।

प्रेष्याणां भर्त्तृसम्बन्ध्यशौचे विशेषमाह—कारणात् गच्छति प्रेष्यमिति कारणादेकत्र वासात्, तदाशुच्यमिति प्रैष्यसम्बन्ध्यशौचं भर्त्तृगामि न भवतीति।

[2][प्रेष्याणां] सहवासादशौचं भवतीति स्पष्टमाह—

बृहस्पतिः—

दासान्तेवासि[3]भृतकाः शिष्याश्चैकत्रवासिनः।
स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके॥

अन्तेवासी च नारदेन व्याख्यातः—

तथाच नारदः—

स्वशिल्पमिच्छन्नाहर्त्तुं बान्धवानामनुज्ञया।
आचार्य्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम्॥ इत्यादि।

मनुः—

दशाहं शावमाशौचं सपिण्डेषु विधीयते।
[4]आ वा सञ्चयनादस्थ्नां त्र्यहमेकाहमेव वा॥

---

(१) क योनिसम्बन्धाः।
(२) ग पुस्तके [ ] चिह्नितपदं नास्ति।
(३) ग पुस्तके -भृतकाः।
(४) मूलपुस्तके—अर्व्वाक्।

आशौचमिति अशुचिशब्दात् भावप्रत्यये वैकल्पिकोभयपद
वृद्धा आशौचम् [1][ मध्यपदवृद्धा अशौचम्, आदिपदमात्रवृद्धा
आशुच्यम् ]। अस्थिसञ्चयनादेति चतुरहोपलक्षणम्।

यद्यपि—

अपरेद्युस्तृतीये वा अस्थ्नां सञ्चयनं भवेत्।

इति छन्दोगपरिशिष्टकृतोक्तम्। तथाप्यत्र "चतुर्थे दिवसे अस्थि
सञ्चयनं कुर्य्यात् इति विष्णूक्तं ग्राह्यम्।

सञ्चयनं चतुर्थ्यामयुग्मान् ब्राह्मणान् भोजयेत्।

इत्यादि कात्यायनोक्तचतुरहोपलक्षणम्[2]।

त्र्यहमेकाहमेव वा इत्यत्र मनुवचने उत्तरोत्तरलघुकालो
पदेशात् आ वा सञ्चयनादिति त्र्यहाधिककालप्रतीतेर्ब्राह्मण
विषयञ्चेदम्।

शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः।

इत्यादिमनुवचनेनैव ब्राह्मणविषयत्वोपसंहारात्। तेनात्र क्षत्रिया
द्यस्थिसञ्चयनकालो न रुद्यते।

अत्र [3]श्रौतस्मार्त्ताग्निमतोऽहरहःप्रवृत्तमन्त्रब्राह्मणात्मकवेदा
ध्यापकस्यैकाहमशौचं। केवलश्रौताग्निमतः केवलमन्त्रब्राह्मणात्मक
वेदाध्यापकस्य च त्र्यहः। स्मार्त्ताग्निमतोऽहरहर्मन्त्रमात्रपाठ

---

(१) ख पुस्तके [ ] चिह्नितांशः पतितः।

(२) ख ग चतुरहो बोद्धव्यः।

(३) क श्रौताग्निमतः।

वेदाध्यापनयुक्तस्यापि त्र्यह एव। केवलस्मार्त्ताग्निमतश्चतुरहः। श्रौतस्मार्त्ताग्निवेदाध्यापनरहितस्य दशाहः।

यदाह दक्षः—

एकाहाद्ब्राह्मणः [1]शुध्येद्योऽग्निवेदसमन्वितः।
हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा॥

श्रौताग्निवेदाध्यापनयोरेकगुणरहितो हीनः, गुणद्वयरहितो हीनतरः।

यच्च पराशरवचनं—

एकाहाद्ब्राह्मणः शुध्येत् योऽग्नि-वेदसमन्वितः।
त्र्यहात् केवलवेदस्तु निर्गुणो दशभिर्दिनैः॥

इत्यत्र केवलवेदग्रहणं केवलश्रौताग्निमपि गृह्णाति तुल्य-[2]न्यायात्। निर्गुणो दशभिर्दिनैरित्यत्र स्मार्त्ताग्न्यहरहःप्रवृत्त-मन्त्रमात्रवेदाध्यापनगुणयोगाभावेऽपि बोद्धव्यः। श्रौताग्नि-वेदाध्यापनगुणमात्राभावपरत्वे मनु-दक्षोक्तचतुरहबृहस्पत्युक्त-पञ्चाहपक्षयोर्निर्विषयत्वापत्तेः।

तथाच बृहस्पतिः—

त्रिरात्रेण विशुध्येत्तु विप्रो वेदाग्निसंयुतः।
पञ्चाहेनाग्निहीनस्तु दशाहो ब्राह्मणब्रुवः॥

अहरहर्मन्त्रमात्रवेदाध्यापनयुक्तस्य स्मार्त्ताग्निनाऽपि रहितस्य पञ्चाहः। ब्राह्मणब्रुवश्चाङ्गिरसोक्तः।

---

(१) क शुध्येदग्निवेद-।

(२) ख ग पुस्तकद्वये— -न्यायत्वात्।

यथाङ्गिराः—

गर्भाधानादिसंस्कारैर्युक्तश्च नियमव्रतैः।

नाध्यापयति नाधीते स ज्ञेयो ब्राह्मणब्रुवः॥

नियमव्रतैरिति प्रात्यहिकस्नानसन्ध्यैकादश्युपवासादिभिः। अयञ्चाशौचसङ्कोचो होमाध्यापनार्थं एव।

न तु

सन्ध्यां पञ्चमहायज्ञं नैत्यिकं स्मृतिकर्म्म च।

तन्मध्ये हापयेत्तेषां दशाहान्ते पुनःक्रिया॥

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।

दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते॥

इति जाबाल—यमवचनाभ्यां प्रतिषिद्धानां सन्ध्या-पञ्च-महायज्ञ-मृत्तिकाग्रहण-मार्ज्जन-जलप्राणायाम-तर्पणाद्युपेतप्रधान-क्रियारूपस्नानात्मकनैत्यिकस्मृतिकर्म्म-कुलान्नभोजन-दान-प्रतिग्रह-काम्यहोम-स्वाध्यायानामप्यनुष्ठानार्थम्। अनेकवचनविरोधात्।

तथाच छन्दोगपरिशिष्टं कात्यायनः—

सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते।

होमः श्रौतस्तु कर्त्तव्यः शुष्कान्नेनापि वा फलैः॥

अत्र हि होमेऽशौचसङ्कोचो न तु सन्ध्यादावित्युक्तम्।

तथाच पारस्करः—

न स्वाध्यायम्[1] अधीयीरन् नित्यानि निवर्त्तेरन् वैतानवर्ज्जम्।

---

(१) ख न स्वाध्यायानि।

नित्यानि सन्ध्यादीनि वैतानं श्रौतो होमः। वितत्य आहवनीयकुण्डादुद्धृत्य संस्कृत्य स्थानान्तरे अग्निमारोप्य क्रियमाणत्वात्।

तथाच मनुरपि—

न वर्द्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः।
न च तत् कर्म्म कुर्व्वाणः सनाभ्योऽप्यशुचिर्भवेत्॥

इत्यत्र तत्कर्म्मेति तच्छब्देनाग्न्याधानक्रियादि-दान-होमक्रियायामेव सपिण्डानामशौचं दर्शयति।

तथाच शङ्खलिखितौ—

अग्निहोत्रार्थं स्नानोपस्पर्शनादेव पिता शुचिः।

अग्निहोत्रार्थमिति वदन्तौ क्रियान्तरेऽशौचं दर्शयतः।

तथाच गौतमः—

सद्यःशौचं राज्ञाञ्च कार्य्यविरोधात् ब्राह्मणस्य स्वाध्यायानिवृत्त्यर्थम्।

कार्य्यविरोधादिति व्यवहारदर्शनविरोधः तत्परिहारार्थमित्यर्थः[१]। तदेवमादिबहुतरवचनबलादध्यापनहोमयोरेवाशौचाभावस्तत् सद्यःशौचप्रकरणे वच्यामः।

दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तितः।

इति देवलवचने होमः काम्यो होमः, नित्यहोमस्य एकाहादुत्तरकालकर्त्तव्यस्योक्तत्वात्। स्वाध्यायश्चाध्ययनम्।

---

(१) ख पुस्तके अधिकः पाठः -सङ्कोचः क्रियान्तरेष्वपि यत्राशौचाभावः।

तथाच पारस्करः—

न स्वाध्यायमधीयीरन् नित्यानि निवर्त्तेरन् वैतानवर्ज्जम्।

तथाच गौतमः—

मानसमप्यशुचिः।

अस्यार्थः—अशुचिः—सूतकमृतकाशौचवान् प्रकारान्तरेणाप्यशुचिर्मानसमप्यध्ययनं न कुर्य्यात् किमुत वाचनिकमिति।

तथाच कूर्म्मपुराणे व्यासः—

दशाहं प्राहुराशौचं सपिण्डेषु विपश्चितः।
मृतेषु चाथ जातेषु ब्राह्मणानां द्विजोत्तमाः॥
नित्यानि चैव कर्म्माणि काम्यानि च विशेषतः।
न कुर्य्याद्विहितं किञ्चित् स्वाध्यायं मनसाऽपि च॥

दक्षः—

ग्रन्थार्थतो विजानाति वेदमङ्गैः समन्वितम्।
सकल्पं सरहस्यञ्च क्रियावांश्चेन्न सूतकम्॥

कल्प इति ज्योतिष्टोमाद्यनुष्ठानपद्धतिर्यास्क वाराह-बौधायनीयाद्याः। अङ्गैरित्यनेन सिद्धेः पृथक्कल्पग्रहणं कल्पस्य सम्यक्ज्ञानार्थं, रहस्यमुपनिषत् क्रियावानिति अग्निहोत्रादिक्रियावान् न सूतकमिति एकाहमप्यशौचं नास्तीत्यर्थः।

पराशरः—

अग्नयो यत्र हूयन्ते वेदो वा यत्र पठ्यते।
सततं वैश्वदेवश्च नाशौचं मृतसूतके॥

ब्रह्मचारी गृहे यत्र हूयते च हुताशनः।
सम्पर्कविनिवृत्तानां नाशौचं मृतसूतके॥

वेदो वेति वाशब्दः समुच्चयार्थः। सततमिति प्रत्येकं सम्बध्यते। सम्पर्कः सूतिकास्पर्शः।

तथा कूर्म्मपुराणे—

वेदार्थविदधीयानो योऽग्निमान् वृत्तिकर्षितः।
सद्यःशौचं भवेत्तस्य सर्व्वावस्थासु सर्व्वदा॥

अधीयानो वेदाध्ययनं[१] कुर्व्वाणः। वृत्तिकर्षितः उञ्छशिलादिलघुवृत्तिस्थः।

मनुः—

शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति॥

देवलः—

शूद्रस्य त्रिंशता शुद्धिर्विंशत्या दिवसैर्विशः।
राज्ञः पञ्चदशाहेन दशभिर्ब्राह्मणस्य तु॥
आशुच्यं दशरात्रन्तु सर्व्वेषामप्यपरे विदुः।
निधने प्रसवे चैवं पश्यन्तः कर्म्मणः क्षयम्॥

नित्य-नैमित्तिकस्वकर्म्मानुष्ठानार्थं वेदाग्निसंयोगरहितयोर्यथेष्टाचरणशीलयोरत्यन्तनिर्गुणयोः क्षत्रियवैश्ययोः पञ्चदशाहविंशत्यहौ। अत्यन्तोत्कृष्टगुणानान्तु स्वकर्म्मानुष्ठानहानौ मनःपीड़ामनुभवतां क्षत्रिय-विट्-शूद्राणां दशरात्रमशौचम्।

(१) क पुस्तके अध्ययनं।

अयमप्यशौचसङ्कोचः स्वकर्म्मानुष्ठानार्थं एव, मनूक्तकाला
वधिनैव तु सर्व्वाशौचनिवृत्तिः। तथाचायमेव हेतुमाह पश्यन्तः
कर्म्मणः क्षयमिति।

गौतमः—

शावाशौचन्तु दशरात्रमन्टत्विक्दीक्षित ब्रह्मचारिणाम् सपि
ण्डानामेकादशरात्रं क्षत्रियस्य द्वादशरात्रं वैश्यस्य अर्द्धमास
एकमासं वा शूद्रस्य।

अस्यार्थः—

ऋत्विग्दीक्षितब्रह्मचारिव्यतिरिक्तानां ब्राह्मणानां सपि-
ण्डानां दशरात्रमशौचम्। ऋत्विक् यज्ञमध्यस्थो याजनं कुर्व्वाणो
दीक्षितः सोमयागेन यजमानो दीक्षनीययागात् परमायज्ञ-
समाप्तेः। सम्यगधीतवेदस्याग्निहोत्रिणः क्षत्रियस्यैकादशाहं वैश्य-
स्याप्येवंविधगुणविशिष्टस्य द्वादशाहम्।

पराशरः—

क्षत्रियस्तु दशाहेन स्वकर्म्मनिरतः शुचिः।
तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात्॥

क्षत्रियवैश्यावुक्तगुणावेव। किन्तु क्षत्रियस्य वेदार्थज्ञानमधिकं
यदि तदैवम्।

मनुः—

शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम्।
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टञ्च भोजनम्॥

न्यायवृत्तिः स्वीयमहाभ्युदयहेतु-दृढ़तरस्वधर्म्मबुद्ध्या तत्परेण मनसाऽव्याजेन ब्राह्मणशुश्रूषा-नमस्कारमन्त्रक-पञ्चमहायज्ञानुष्ठानं अभक्ष्यभक्षणनिवृत्तिर्निषिद्धानाचरणञ्च एवम्विधस्य शूद्रस्य मनूक्तेनैव [१]वैश्यसम्बन्धिपञ्चदशाहेन शुद्धिः।

एवम्विधस्यैव शूद्रस्य प्रतिमासं वपनं क्षौरम् अथवा वपनं पिण्डनिर्व्वापः-अमावस्याश्राद्धमिति यावत्। द्विजोच्छिष्टभोजनमप्येवंविधस्यैव शूद्रस्य।

न शूद्रायोच्छिष्टं दद्यादिति तु मनुवचनमेवम्विधशूद्रव्यतिरिक्तशूद्रविषयम्।

अयमपि चाशौचसङ्कोचो ब्राह्मणशुश्रूषार्थ एव न तु पञ्चमहायज्ञानुष्ठानार्थोऽपि पूर्व्वोक्तन्यायतुल्यत्वात्[२]।

यत्तु देवलवचनेन दशरात्रं शूद्रस्योक्तं तद्ब्राह्मणस्य परिचारकान्तराभावे।

शातातपः—

शूद्रो विंशतिरात्रेण शुध्येत्तु मृतसूतके।

इदन्तु पूर्व्वोक्तगुणानामसम्पूर्णत्वे बोद्धव्यम्।

पैठीनसिः—

षोड़शाहं क्षत्रियस्य।

इदञ्चात्यन्तनिर्गुणस्य परपीड़ादिकारित्वे।

---

(१) क वैश्यवत्।

(२) क -नार्थमपि पूर्व्वोक्तेन तुल्यन्यायात्।

आदिपुराणे—

शौचाशौचं प्रकुर्व्वीरन् शूद्रवद्वर्णसङ्कराः।

शूद्रवदिति मासाशौचग्रहणम्। वर्णसङ्करा इति अपकृष्ट-वर्णेनोत्कृष्टवर्णस्त्रीषु जाताः।

अङ्गिराः—

चतुर्थेऽहनि कर्त्तव्यः संस्पर्शो ब्राह्मणस्य तु।

एकादशे त्वन्नशुद्धिर्दानमध्ययनक्रिया[1]॥

अत्र ब्राह्मणस्येति अविशेषेणोपादानात् त्र्यहैकाहाद्य-शौचिनामपि चतुर्थाह एवाङ्गस्पर्शोऽवगम्यते।

तत्र कूर्म्मपुराणे व्यासः,—

शुचीननिधनांस्त्वन्यान् शालाग्नौ हावयेद्द्विजान्।

शुष्कान्नेन फलैर्वापि वैतानं जुहुयात्तथा॥

न स्पृशेयुरिमानन्ये न च तेभ्यः समाहरेत्।

चतुर्थे पञ्चमे वाह्नि संस्पर्शः कथितो बुधैः॥

अत्रेमानिति प्रकृतान् वैतानहोमकर्त्तॄन् परामृशति। अनिधनानिति होमार्थं प्रवर्त्तयितुमनिर्द्दिष्टमनुकल्पितं धनं येषां तान्, पञ्चमेऽह्नीति क्षत्रियाभिप्रायेण।

पुनरङ्गिराः,—

पञ्चमेऽहनि विज्ञेयः संस्पर्शः क्षत्रियस्य तु।

सप्तमेऽहनि वैश्यस्य ज्ञेयं संस्पर्शनं[2] बुधैः॥

---

(१) क क्रियाः।

(२) क विज्ञेयं स्पर्शनं।

क्षत्रियस्यान्नशुद्धिः स्यात् द्वादशाहेन नित्यशः।
अर्द्धमासेन वैश्यस्य द्वादशाहेन वा पुनः॥
दशमेऽहनि शूद्रस्य कार्य्यं संस्पर्शनं बुधैः।
मासेनैव तु शुद्धिः स्यात् मृतके सूतके तथा॥

द्वादशाहेनेति अतिक्रान्तेन द्वादशाहेन त्रयोदशेऽह्नीत्यर्थः। एवमर्द्धमासेनेत्यत्रापि षोड़शेऽह्नीति बोद्धव्यम्। वैश्यस्य द्वादशाहेन वेति भोक्तुरन्नान्तराभावे उक्तगुणविशिष्टस्य वैश्यस्य। नित्यश इति दशाहैकादशाहाशौचिनोरपि क्षत्रिययोः सर्व्वाशौचह्रासाभावज्ञापनार्थम्।

मासेनैव तु शूद्रस्य इत्यत्रापि एवकारकरणं न्यायवर्त्तिनोऽपि शूद्रस्य सर्व्वाशौचह्रासो नास्तीति दर्शयति। पञ्चमेऽहनि क्षत्रियस्येति द्वादशाहैकादशाहाशौचिनां क्षत्रियाणां, सप्तमेऽहनीति पञ्चदशाह-द्वादशाह दशाहाशौचिनां वैश्यानाम्।

सम्वर्त्तः,—

चतुर्थेऽहनि कर्त्तव्यमस्थिसञ्चयनं द्विजैः।
ततः सञ्चयनादूर्द्धमङ्गस्पर्शो विधीयते॥
चतुर्थेऽहनि विप्रस्य षष्ठे वै[1] क्षत्रियस्य च।
अष्टमे दशमे चैव स्पर्शः स्याद्वैश्यशूद्रयोः॥

षष्ठेऽहनीति पञ्चदशाह षोड़शाहाशौचिनोः क्षत्रिययोः। अष्टमेऽहनीति विंशत्यहाशौचिनो वैश्यस्य। अनुपनीत-समानोदकाचार्य्योनद्विवार्षिकादिमरणे त्वशौचकालत्रिभागेण स्पृश्यत्वम्।

(१) क षष्ठेऽह्नि क्षत्रियस्य तु।

यथा देवलः,—

अशौचकालाद्विज्ञेयं स्पर्शनन्तु विभागतः।
शूद्र-विट् चत्र-विप्राणां यथाशास्त्रप्रचोदितात्॥

एतच्च यत्रैव शावाशौचे चतुर्णामपि वर्णानामङ्गस्पर्शनकालावधिविशेषो न श्रूयते। तत्र सर्व्वत्र बोद्धव्यम्।

दक्षः,—

अस्नात्वा चाप्यहुत्वा च भुङ्क्तेऽदत्वा च यस्तु वै।
एवंविधस्य विप्रस्य सूतकं समुदाहृतम्॥
व्याधितस्य कदर्य्यस्य ऋणग्रस्तस्य सर्व्वदा।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः॥
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः।
श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेत्॥
न सूतकं कदाचित् स्यात् यावज्जीवन्तु सूतकम्।

सूतकं समुदाहृतमिति यावज्जीवमिति शेषः। व्याधितस्य नित्यव्याधिगृहीतस्य।

कदर्य्यस्य लक्षणमाह देवलः—

आत्मानं धर्म्मकृत्यञ्च पुत्रदारांश्च पीड़यन्।
लोभाद्यः प्रचिनोत्यर्थान् स कदर्य्य इति स्मृतः॥

ऋणग्रस्तस्यापरिशोधितदेवर्षिपितृणस्य। क्रियाहीनस्य नित्यनैमित्तिककर्म्मानुष्ठानरहितस्य[1] व्यसनासक्तचित्तस्य द्यूत-

(१) क क्रियानसुष्ठायिनः।

वेश्यादिप्रसक्तस्य पराधीनस्य राजादिसेवकस्य। व्यक्तमपरम्।
न सूतकं कदाचिदपि ग्रन्थार्थतो विजानाति इति प्रागिवोक्तम्।
यावज्जीवं सूतकमिति प्रत्युदाहरणतया पुनरुपन्यस्तम्।
तथा च कूर्म्मपुराणे—

क्रियाहीनस्य मूर्खस्य महारोगिण एव च।
यथेष्टाचरणस्याहुर्यावज्जीव[1]मशौचकम्॥

आदिपुराणे—

अन्यपूर्व्वा यस्य गेहे भार्य्या स्यात्तस्य नित्यशः।
अशौचं सर्व्वकार्य्येषु देहे भवति सर्व्वदा।
दानं प्रतिग्रहः स्नानं सर्व्वं तस्य भवेद्वृथा।

गेह इत्युपादानात् समस्तगृहकार्य्यकारिणी [2]भार्य्येत्यर्थः।

---

## अथ जननाशौचम्।

मनुः—

[3]यथेदं शावमाशौचं सपिण्डेषु विधीयते।
जननेऽप्येवमेव स्याद्विप्राणां[4] शुद्धिमिच्छताम्॥
सर्व्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः॥

---

(१) क मरणान्तमशौचकम्। (४) क निपुनां।
(२) क यस्येत्यर्थः।
(३) ख ग पुस्तकद्वये यथेदमित्यादिचरणद्वयं पतितम्।

एवमेवेति दशराचादिकालातिदेशः सपिण्डानामस्पृश्य-त्वातिदेशप्रसक्तौ विशेषमाह सर्व्वेषां शावमाशौचमिति।

अस्यार्थः—

मरणनिमित्तमस्पृश्यत्वं सर्व्वेषां सपिण्डानामपि जनन-निमित्तमस्पृश्यत्वं पुनर्मातापित्रोरेव तत्रापि विशेषमाह—सूतकं मातुरेव स्यादिति। जनननिमित्तमस्पृश्यत्वं दशरात्रं मातुरेव पिता तु स्नातः स्पृश्यो भवति।

अत्रापि विशेषमाहाङ्गिराः—

नाशौचं सूतके पुंसः सपिण्डानां कथञ्चन।
मातापित्रोरशौचं स्यात् सूतकं मातुरेव वा॥

अस्यार्थः—

पुंसः सूतके पुंजातीयापत्योत्पत्तौ मातापित्रोरशौच-मस्पृश्यत्वलक्षणं सपिण्डानान्तु नास्पृश्यत्वरूपम्। सूतकं मातुरेव वेति वाकारो व्यवस्थितविकल्पः स्त्रीजन्मविषयः। एतदुक्तं भवति कन्योत्पत्तौ पितुरस्पृश्यत्वं नास्तीति।

बृहस्पतिः—

शावाशौचन्तु सर्व्वेषां सूतकं मातुरेव च।
स्नानं पिता प्रकुर्व्वीत स्नातयो न सचेलिनः॥

सूतकं मातुरेव चेति पुंसः प्रसवे स्त्रीप्रसवे च व्यवस्थितमेव दशाहं मातुरस्पृश्यत्वम्।

पिता पुनर्यावत् पुंसः प्रसवे स्नानं न करोति तावदस्पृश्यः। प्रशब्दस्तु तत्स्नानकर्त्तुः सचेलत्वे च स्नानक्रियायाः प्रकर्षमाह तेन पिता सचेलः स्नायादित्यर्थः। एतच्च सम्बर्त्तवचने स्फुटं भविष्यति। पितुः स्नानं यत् सचेलं विहितं ज्ञातयस्तन्न कुर्य्युरित्यर्थः। एतेन मलाद्यपकर्षणार्थं यत् स्नानं तन्न निषिद्धम्।

पितुः स्नानविशेषमाह सम्बर्त्तः—

जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः॥

पुत्र इत्युपादानात् स्त्रीजन्मनिमित्तं स्नानं नास्तीति दर्शयति।

पराशरः—

यदि पत्न्यां प्रसूतायां द्विजः [1]सम्पर्कमिच्छति।
सूतकन्तु भवेत्तस्य यदि विप्रः षड़ङ्गवित्॥

यदि षड़ङ्गविदपि विप्रः तथापि प्रसूतायाः पत्न्याः सम्पर्कें दशाहमेवास्पृश्यो भवति। इति।

सुमन्तुः—

मातुरेव सूतकं तां स्पृशतः पितुश्च नेतरेषाम्॥

शङ्खलिखितौ—

जननेऽप्येवं तेषां तत्र मातापितरावशुचौ मातेत्येके।

तेषां सपिण्डानां दशरात्रादिकर्म्मानर्हत्वं जननेऽपि तत्र जनने

---

(१) क पुस्तके सम्पर्कं कुरुते द्विजः। ग पुस्तके स्पर्शकम्।

मातापितरावस्पृश्यौ मातेत्येक इत्यनेन पूर्व्वोक्तं दशरात्रमस्पृश्यत्वं मातुरित्युक्तम्। एकेग्रहणं पूजार्थं न तु विकल्पार्थम्।

अङ्गिराः—

सूतके सूतिकावर्ज्जं संस्पर्शो न प्रदुष्यति[१]।
संस्पर्शे सूतिकायाश्च स्नानमेव[२] विधीयते॥

कूर्म्मपुराणे व्यासः—

सूतके तु सपिण्डानां संस्पर्शो नैव दुष्यति।
सूतकं सूतिकाञ्चैव वर्ज्जयित्वा नृणां पुनः॥

नृणां सम्पर्ककर्त्तृणामित्यर्थः। सूतकं पितरमित्यर्थः। एतच्च स्नानात् पूर्व्वमित्यर्थः।

आदिपुराणे—

सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः।
कृत्वा सचेलं स्नानन्तु शुद्धो भवति तत्क्षणात्॥
अन्याश्च मातरस्तद्वत् तद्गेहं न व्रजन्ति चेत्।
सपिण्डाश्चैव संस्पृश्याः सन्ति सर्व्वेऽपि नित्यशः[३]॥
ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः।
गतैः शूद्रा तु संस्पृश्या त्रयोदशभिरेव च॥

जातस्य पुत्रस्य मुखदर्शनानन्तरं स्नानं कृत्वा तत्क्षणात् शुद्धो भवतीत्यभिधानात् पुत्रे जाते यत् पितुः सचेलं स्नानं विहितं तत् पुत्रमुखदर्शनानन्तरमिति दर्शयति।

---

(१) क नैव दुष्यति। (३) ग निश्चयः।
(२) क -मात्रं।

एवञ्च पुत्रजन्मस्नानवत् पुत्रमुखदर्शनोत्तरकालमेव[1] वृद्धिश्राद्धन्तु पुत्रोत्पत्त्यनन्तरं न कर्त्तव्यं किन्त्वशौचापगमे कर्त्तव्यम्।

तथाहि किं जातकर्म्मनिमित्तं तत् श्राद्धं पुत्रजन्मनिमित्तं वा, नाद्यः—न शोष्यन्ती—जातकर्म्म-प्रोषिता-गतकर्म्मसु, इत्यनेन छन्दोगपरिशिष्टकृता निषिद्धत्वात्।

पुत्रजन्मनिमित्तमिति चेत् तर्हि वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इति जातेष्टिवदशौचापगम एव कर्त्तव्यं शौचस्याधिकारिविशेषणत्वात्। अशौचापगमे जातेष्टिः क्रियते इत्युचितमिति चेत् तर्हि समानं वृद्धिश्राद्धेऽपि।

तथाच विष्णुधर्म्मोत्तरे मार्कण्डेयः—

अच्छिन्ननाड्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि।
अशौचोपरमे कार्य्यमथवापि नराधिप॥

अत्र पूर्व्वार्द्धेन पूर्व्वपक्षमाशङ्क्य[2] उत्तरार्द्धेन सिद्धान्तितम् शौचस्याधिकारिविशेषणत्वात्।

यथा छन्दोगपरिशिष्टम्,—

अग्नौकरणहोमश्च कर्त्तव्य उपवीतिना।
प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिश्रुतेः॥

इति पूर्व्वपक्षमाशङ्क्य सिद्धान्तितम्—

अपसव्येन वा कार्य्यो दक्षिणाभिमुखेन च।
निरूप्य हविरन्यस्मा अन्यस्मै नहि हूयते[3]॥

---

(१) ग तेन पुत्रजन्मनिमित्तस्नानवत् पुत्रमुखदर्शननिमित्तमपि स्नानं।

(२) क आशङ्कितम्। (३) क पुस्तके प्रतिपादयेत्।

किञ्च,—

अच्छिन्ननाड्यां साङ्गहद्धिश्राद्धम् कर्त्तुमपि न शक्यते तावत्-कालं स्तन्यादाने पुत्त्रनाशप्रसङ्गात्। अतएव पुत्त्रजन्मनिमित्तं [1]श्राद्धमशौचापगम एव कर्त्तव्यमिति निश्चितम्।

तेन पुत्त्रजन्मवत् पुत्त्रमुखदर्शनस्यापि वृत्तस्यैव[2] श्राद्ध-निमित्तता। अन्याश्च मातरस्तद्वदिति तत्क्षणादेव शुद्धा इत्यतिदिश्यते न तु स्नानमप्यतिदिश्यते।

तद्गेहं न व्रजन्ति चेदित्यनेन यदि सूतिकास्पर्शनं न कुर्व्वन्तीति विवक्षितं, तद्गृहगमने हि स्पर्शसम्भावना अगमने तु स्पर्शसम्भावना[3] नास्ति। एतेनैतदुक्तं भवति सूतिकासपत्नीनां सूतिकास्पर्शे दशाहमेवास्पृश्यत्वम्। शूद्रास्त्वयोदशभिरित्यसच्छूद्रा-भिप्रायम्।

तथा च प्रचेताः,—

सूतिका सर्व्ववर्णानां दशाहेन विशुध्यति।
ऋतौ तु न पृथक् शौचं सर्व्ववर्णेष्वयं विधिः॥

अत्र हि सच्छूद्राया दशाहेन स्पृश्यत्वमुक्तम्।

पैठीनसिः,—

सूतिकां पुत्त्रवतीं स्नातां विंशतिरात्रेण सर्व्वकर्म्माणि कार-येत् मासेन स्त्रीजननीम्। इति।

---

(१) ख पुस्तके वृद्धिश्राद्धमशौचान्त एव।
(२) ख -दर्शनेऽपि वृत्त एव।
(३) ग -शङ्कैव।

सर्व्वकर्म्माणीति अदृष्टार्थानां दैवपैत्राणां कर्म्मणामुप-
संग्रहार्थम्।

दशाहेनैवास्पृश्यत्वापगमे सति दृष्टार्थकर्म्माधिकारिणीत्वात्[1]
स्नातामिति विंशतिरात्रोत्तरकालं पुनःस्नानविधानार्थं दैव-
पैत्रकर्म्माङ्गस्नानस्य तत्करणेनैव प्राप्तत्वात्।

---

(१) ख पुस्तके—कारात्।

# अथाशौचे विधिनिषेधौ।

जावालः,—

सन्ध्यां पञ्चमहायज्ञान्नैत्यकं[1] स्मृतिकर्म्म च।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनःक्रिया॥

[2]नैत्यकं स्मृतिकर्म्म प्रागेव व्याख्यातं चकारादभीष्टदेवतापूजादि। दशाहान्ते पुनःक्रियेत्यनेन वेदाग्निसंयोगादिभिरप्येतेष्वशौचसङ्कोचो नास्तीति दर्शयति। [3]अन्यथा तन्मध्ये हापयेदित्यनेनैव प्राप्तत्वाद्दशाहान्ते पुनः क्रियेत्यवचनीयं स्यात्।

छन्दोगपरिशिष्टं कात्यायनः,—

सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते।
होमः श्रौते तु कर्त्तव्यः शुष्कान्नेनापि[4] वा फलैः॥
अकृतं हावयेत् स्मार्त्ते[5] तदभावे कृताकृतम्।
हावयेदिति किं तत्स्यादनारम्भविधानतः॥
कृतमोदनशक्त्वादि तण्डुलादि कृताकृतम्।
ब्रीह्यादि चाकृतं सर्व्वमिति हव्यं त्रिधा मतम्॥
सूतके च प्रवासे च अशक्तौ श्राद्धभोजने।
एवमादिनिमित्तेषु हावयेदिति योजयेत्॥

---

(१) (२) क पुस्तके नैत्यिकं।
(३) क पुस्तके अन्यथेत्यादिस्यादित्यन्तः पतितः।
(४) ख पुस्तके शुद्धार्थेनापि।
(५) ग पुस्तके स्मार्त्तः।

सन्ध्यादीनामित्यादिपदेन जावालोक्त-पञ्चमहायज्ञादिक्रिया ग्रहणं, शुष्कान्नं शक्तवो लाजाश्च जलोपसेकव्यतिरेकेण [1]सिद्धाः। तण्डुलग्रहणन्तु न युक्तं कृताकृतपदवाच्यैस्तण्डुलैः स्मार्त्ताग्नौ होमविधानात्।

हावयेदित्यन्यगोत्रजान् धनदानव्यतिरेकेणेत्यर्थः[2]। अत्र शङ्कते हावयेदिति किं कस्माद्धेतोः स्मार्त्ताग्नौ हावयेदिति [3]युज्यते। उत्तरमाह—तत् स्यादनारम्भविधानत इति हावयेज्जुहुयाद्वेत्यर्थः। हावयेदिति यदुक्तं गोभिलेन तत् स्मार्त्ताग्नौ सूतकादिषु निमित्तेषु स्यात्, कुतः—अनारम्भविधानतः।

नह्येतत् गोभिलेन किञ्चित् कर्म्म किञ्चिद्वा निमित्तमारभ्य विहितम्। अतो योग्यतया निमित्तेषु योज्यं तान्येव निमित्तानि स्फुटीकरोति सूतके च प्रवासे चेत्यादिना।

अकृतादिशब्दार्थान् व्याकुरुते कृतमोदनशक्वादीति आदि-शब्देन लाज मोदक पर्पट वटक पिष्टकप्रभृतीनां ग्रहणम्। तण्डुलादीत्यादिशब्देन माष-मुद्ग-तिलानामुपादानं व्रीह्यादीत्यादि-शब्देन यव-गोधूम-शालीनां ग्रहणम्। शरत्पक्वधान्यं व्रीहिः, हैमन्तिकं शालिः।

पारस्करः,—

(१) क—सिद्धत्वात्। ग—सिद्धैः।

(२) ख पुस्तके अभ्यर्थ्य। ग—अभ्यर्च्चेर।

(३) ग—योज्यते।

न स्वाध्यायमधीयीरन् नित्यानि निवर्त्तेरन् वैतानवर्ज्जं शालाग्नौ चैके। [1]अन्य एतानि कुर्य्युः।

न स्वाध्यायमधीयीरन्निति दशाहमध्येऽध्ययननिषेधः, अध्यापने त्वशौचह्रास उक्त एव। नित्यानि निवर्त्तेरन्नित्यत्र नित्यानि जावालोक्तानि, वैतानवर्ज्जमिति वैतानं श्रौताग्नौ होमकर्म्म न निवर्त्तते इत्यर्थः। शालाग्नौ चैक इति आवसथ्याग्नौ होमकर्म्म न निवर्त्तते इत्येके मन्यन्ते। एकेग्रहणं पूजार्थं न विकल्पार्थम्। अन्य एतानि कुर्य्युरिति अन्ये अन्यगोत्रजा एतानि होमकर्म्माणि कुर्य्युः कारयितव्या इत्यर्थः।

जावालः,—

जन्महानौ वितानस्य कर्म्मत्यागो न विद्यते।
शालाग्नौ केवलो होमः कार्य्य एवान्यगोत्रजैः॥

हानिर्मरणम् तेन जन्महानाविति जन्ममरणयोरित्यर्थः। कर्म्मत्यागो न विद्यत इत्यनेनात्यज्यत्वविधानात् एकाहं त्र्यहं वा अन्यगोत्रजान् पूर्व्वोक्तव्यवस्थया हावयित्वा ऊर्द्ध्वं स्वयं वैतानहोमकर्म्म कर्त्तव्यम् शालाग्नौ पुनः केवलो होमोऽन्यगोत्रजैरेव कारयितव्य [2][ एवकारो भिन्नक्रमेऽन्यगोत्रजद्वारेणैव कारयितव्यः ] इत्यर्थः।

अत्र छन्दोगपरिशिष्टकृत् पारस्करजावालस्वरसात् [2][ दशाहमेवान्यो हावयितव्य इति प्रतीयते। तेन पञ्चाहेनाग्निहोत्रस्तु

(१) ख पुस्तके अन्ये ए।
(२) क पुस्तके [ ] चिह्नितांशः पतितः।

हीने हीनतरे चेति दक्षादिवचनाच्च यदा अन्यगोत्रजो हावयितुं दशाहं न शक्यते तदा पूर्व्वोक्तव्यवस्थानुसारेण त्र्यहाच्चतुरहाच्च ऊर्द्धं स्वयमपि ] शालाग्नौ होमः कर्त्तव्य इति।

पुनर्जाबालः,—

उभयत्र दशाहानि सपिण्डानामशौचकम्।
स्नानोपस्पर्शनाभ्यासादग्निहोत्रार्थमर्हति॥

उभयत्र जनने मरणे चेत्यर्थः। स्नानोपस्पर्शनाभ्यासादिति स्नानाचमनयोर्दिनत्रयाभ्यासाच्चतुर्थदिवसात् प्रभृति अग्निहोत्रानुष्ठानार्थमधिकारी भवति। अत्र च दशाहाशौचे विद्यमान एवाग्निहोत्रानुष्ठानं प्रतिपादयन् स्फुटमेव सर्व्वाशौचसङ्कोचो नास्तीति दर्शयति—

मनुः,—

न वर्द्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः।
न च तत्कर्म्म कुर्व्वाणः सनाभ्योऽप्यशुचिर्भवेत्॥

अघाहानि अशौचाहानि तेषां यदा वेदाग्निसंयोगबलात् सङ्कोचो विहितः तदा "निष्कर्म्मा सुखमासिष्ये" इति सन्धाय दशाहमशौचं नाश्रयणीयम्। सङ्कुचितेष्वप्यशौचदिवसेषु क्रिया होमकर्म्माणि न प्रत्यूहेत् न विघातयेदित्यर्थः। किन्त्वन्यगोत्रजान् कारयेत्। यतस्तदाग्निहोत्रकर्म्म सनाभ्यः सपिण्डोऽपि कुर्व्वाणो नाशुचिर्भवति किमुतान्यगोत्रज इति।

तथा,—

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते॥

इत्युत्तरार्द्धं प्रागेव व्याख्यातम्। कुलस्यान्नं न भुज्यते इति अशौचिकुलस्यान्नमन्यगोत्रजैर्न भोक्तव्यम्। यतोऽशौचिनां सपिण्डानामन्योन्यस्यान्नं भोक्तव्यमाह—

यमः—

सूतके च कुलस्यान्नमदोषं मनुरब्रवीत्।
एकादशेऽह्नि कुर्व्वीत दानमध्ययनं तपः॥
त्रेताधर्म्मोपरोधार्थमारण्यस्यैतदुच्यते।
अरणीसम्भवो वह्निर्दहेत्पापं सदा हुतः[1]॥

तप उपवासादिरूपं, आरण्योऽरणिसम्भवो वह्निस्तस्य त्रेता अग्नित्रितयं दक्षिणाग्नि-गार्हपत्याहवनीयकात्मकं तत् सम्बन्धी धर्म्मो होमः तदुपरोधो माभूदित्येतदर्थमेतदुच्यते। किन्तु तत्राह अरणीसम्भव इति पापमशौचं यस्माच्छ्रौताग्निरशौचं हन्ति तस्मात्तत्र होमकर्म्म कर्त्तव्यमित्यर्थः।

शङ्खश्च,—

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च।
प्रेतपिण्डक्रियावर्ज्जं सूतके विनिवर्त्तते॥

पितृकर्म्म अमावस्यादिश्राद्धं सूतके जननमरणाशौचे निवर्त्तते न विहितमित्यर्थः। तेनामावस्यादिश्राद्धविधायकानि वचनानि अशौचादिरहितामावस्यादिषु श्राद्धानि विदधति।

---

(१) ख पुस्तके समाहुतः।

प्रेतपिण्डक्रियावर्ज्जमिति प्रेतश्राद्धक्रिया न निवर्त्तते। तेनाशौचमध्ये यदि प्रेतश्राद्धादि[1] सम्भवति तदाशौचान्त-दिवसानन्तरदिवसे कर्त्तव्यं नत्वशौचमध्य एव। यतोऽशौचमध्ये श्राद्धदिने सति अशौचोत्तरकालं श्राद्धकर्त्तव्यतामृष्यशृङ्गो[2]बोधयति।

प्रेतश्राद्धव्यतिरिक्तञ्च श्राद्धमशौचे शङ्खेन पर्य्युदस्तम्। अत-स्तस्याविहितत्वात् कर्त्तव्यतैव नास्ति कथमशौचोत्तरकाले कर्त्तव्यता।

प्रेतश्राद्धन्तु न पर्य्युदस्तं तद्यद्यशौचमध्ये क्रियते तदा कस्या-शौचोत्तरकालकर्त्तव्यता ऋष्यशृङ्गेनोक्ता अतोऽर्थात् प्रेतश्राद्धमेवा-शौचान्ते कर्त्तव्यं तद्धर्म्मग्राहित्वात् प्रतिसांवत्सरिकञ्च।

यथा ऋष्यशृङ्गः,—

देये पितॄणां श्राद्धे तु अशौचं जायते यदि।
अशौचे (तु) च व्यतीते वै[3] तेषां श्राद्धं विधीयते॥
शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते।
सा तिथिस्तस्य कर्त्तव्या नत्वन्या वै कदाचन॥

अशौचाधिकारे काश्यपः,—

---

(१) क ग पुस्तकद्वये प्रेतश्राद्धदिनम्।
(२) ग दर्शयति।
(३) मूले—तदशौचे व्यतीते तु।

तैः सह ब्राह्मणो न वसेत् न याचेत न दद्यात् द्विपद-चतुष्पद-धान्य-हिरण्य-[1]वस्त्रवर्ज्जम्।

न वसेत् न सहशय्यासनं[2] कुर्य्यात्। न याचेत नाशौचिभ्यः प्रतिगृह्णीयात् न दद्यात् नाशौची दद्यात् द्विपदादिवर्ज्जम्।

एतदेव विशेषयतः,—शङ्खलिखितौ,—

कुमारप्रसवे नाड्यामच्छिन्नायां गुड़-तिल-तैल-हिरण्य वस्त्र गो-प्रावरण-धान्य-प्रतिग्रहेष्वदोषः तदहरित्येके गुर्व्वर्थं कुर्व्वतः।

गुरुः पित्रादिः यदा पित्राद्युपकारार्थं गुड़ादिद्रव्यं नाड़ीछेदात् पूर्व्वं कश्चिदशौची ददाति तदा तत्प्रतिग्रहे दोषो नास्ति अशौचिनोऽपि तद्दानेऽशौचाभावः।

एवञ्च पित्राद्युपकारार्थताव्यतिरेकेण दाने द्रव्यान्तरादाने च नाड़ीछेदात् प्रागप्यशौचं तेन नाड़ीछेदात् प्राक् नाशौचमिति यदुक्तं हारीतेन तत् सहिरण्यतिलपात्रदाने जातकर्म्मसंस्कारानुष्ठाने च शङ्खलिखित-काश्यपादिपुराणोक्तद्रव्यदाने च बोद्धव्यम्।

तथा हारीतः,—

जाते कुमारे पितॄणां मोदात्[3] पुण्यं तदहः तस्मात्तिलपूर्णपात्राणि सहिरण्यानि ब्राह्मणानाहूय पितृभ्यः स्वधां कुर्य्यात् प्रजापतये च प्राङ्नाड़ीछेदात् संस्कारपुण्यार्थान् कुर्व्वन्ति छिन्नायामशौचम्।

---

(१) क -वस्तु-।

(२) ख पुस्तके सहशय्यां सहासनं।

(३) ख पुस्तके पितॄणामामोदात्-.

तदहः पुण्यमित्यनेनैतद्दर्शयति यदा कृत्स्नमेव तदहः पुण्यं तदा नाड़ीच्छेदात्प्राक् सुतरां पुण्यं संस्कारपुण्यार्थानिति संस्कारो जातकर्म्म पुण्यार्था उक्ता एव दानविशेषाः।

आदिपुराणे,—

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्।
आयान्ति यस्मात्तदहः पुण्यं षष्ठञ्च सर्व्वदा॥
तत्र दद्यात् सुवर्णञ्च भूमिं गां तुरगं रथम्।
छत्रं छागञ्च माल्यञ्च शयनञ्चासनं गृहम्॥
जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि॥

विष्णुधर्म्मोत्तरे मार्कण्डेयः,—

सूतिकावासनिलया जन्मदा नाम देवताः।
तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्त्तिता॥
षष्ठेऽह्नि रात्रियागन्तु जन्मदानान्तु कारयेत्।
रक्षणीयं तथा षष्ठीं निशान्तत्र विशेषतः॥
[1]रात्रौ जागरणं कार्य्यं जन्मदानां तथा बलिः।

तद्यागार्थं तदेकरात्रं शुद्धिः प्रकीर्त्तितेत्यर्थः। तत्र जन्माशौचकाले षष्ठीनिशां प्राप्य विशेषतो रक्षणीयं रक्षा कार्य्येत्यर्थः।

तद्यथा,—

पुरुषा शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः।
षष्ठीजागरणं कुर्य्युर्दशम्याञ्चैव सूतिकाः॥

---

(१) क रात्रौ। ख नाम।

सूतिकाः प्रसवसमयावस्थिता नार्य्यो दशम्यां रात्रौ जागरणं कुर्य्युरित्यर्थः।

मार्कण्डेयपुराणे,—

अग्न्यम्बुशून्ये च तथा निर्यूपे सूतिकागृहे।
अदीपशस्त्रमुषले भूतिसर्षपराजिते[1]॥
अनुप्रविश्य या जातमपकृष्या[2]त्मसम्भवम्।
फलप्रसविनीबालं तत्रैवोत्सृजते द्विज॥
सा जातहारिणी नाम सुघोरा पिशिताशना।
तस्मात् संरक्षणं कार्य्यं यत्नतः सूतिकागृहे॥

यूपग्रहणं बद्धछागपशुबन्धनस्तम्भं दर्शयति, यत्नतः संरक्षणं कार्य्यमिति अग्न्यम्बु-बद्धछाग-यूप-दीप-शस्त्र-मुषल-भस्म-सर्षपान् सूतिकागृहे दशरात्रं यावत् स्थापयेदित्यर्थः।

मरीचिः,—

लवणे मधुमांसे च पुष्प-मूल-फलेषु च।
शाक काष्ठ-तृणेष्वप्सु दधि सर्पिः-पयःसु च।
तैलौषध्यजिने चैव पक्वापक्वे स्वयंग्रहे॥
पण्येषु चैव सर्व्वेषु नाशौचं मृतसूतके।

पक्वं शक्तु लाज मोदक-लड्डादि शुष्कमन्नमित्यादिपुराणे दर्शनात्।

---

(१) क -वर्ज्जिते।
(२) ग -हृत्या।

अपक्वं तण्डुलादि तत् स्वाम्यननुमत्या स्वयं गृह्यमाणं न दोषाय भवति। पण्येषु च क्रीतेषु द्रव्येषु सर्व्वेष्वेवाशौचं नास्तीति। लवणादिष्वप्यजिनपर्य्यन्तेषु स्वयंग्रहण एव नाशौचम्।

यथादिपुराणे,—

लवणं मधु मांसञ्च पुष्प-मूल-फलानि च।
काष्ठं लोष्ट्रं तृणं तोयं दधि क्षीरं घृतं तथा॥
औषधं तैलमजिनं शुष्कमन्नञ्च नित्यशः।
अशौचिनां गृहाद्ग्राह्यं स्वयं पण्यञ्च मूलजम्॥

स्वयंग्राह्यमिति लवणादिभिः सर्व्वैरेव सम्बध्यते। पण्यञ्च मूलजमशौचिदत्तमपि न दोषाय पृथग्योगकरणात् मूलजमिति द्रव्यप्राप्तिमूल्यं मूलं तस्माज्जातं क्रीतमित्यर्थः।

तथा कूर्म्मपुराणे,—

जाते कुमारे तदहः कामं कुर्य्यात् प्रतिग्रहम्।
हिरण्य-धान्य-गो-वासस्तिलान्न-श्वेतसर्षपान्॥
फलानि पुष्पं शाकञ्च लवणं काष्ठमेव च।
तोयं दधि घृतं क्षीरमौषधं तैलमेव च॥
अशौचिनां गृहाद् ग्राह्यं शुष्कान्नञ्चैव नित्यशः।

सम्वर्त्तः,—

होमस्तत्र तु कर्त्तव्यः शुष्कान्नेन फलेन वा॥
पञ्चयज्ञविधानञ्च न कुर्य्यान्मृत्युजन्मनोः।
दशाहात्तु परं सम्यक् विप्रोऽधीयीत धर्म्मवित्।
दानञ्च विधिना देयमशुभात्तारकं हि तत्॥

अशुभात्तारकमित्यनेनाशौचकाले यत्पापमुत्पन्नं तत्क्षयार्थ-मशौचे निवृत्ते यथाशक्ति किञ्चिद्देयमिति दर्शयति।

---

## अथ विदेशस्थाशौचम्।

मनुः,—

विगतन्तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम्।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्॥
अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्।
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति॥
निर्दशं ज्ञातिमरणं श्रुत्वा पुत्त्रस्य जन्म च।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः॥

विदेशस्थमन्यदेशस्थं यत्र[1] मृतो झटिति न श्रूयते अनिर्दश-मसमाप्तदशाहं दशाहात् परतः संवत्सरपर्य्यन्तं सपिण्डानां त्रिरात्रं संवत्सरेऽतीते सपिण्डमरणश्रवणे स्नानमात्रेण शुद्धिर्न मातापित्रोः।

तथाच कूर्म्मपुराणे,—

देशान्तरगतं श्रुत्वा सूतकं शावमेव च।
तावदप्रयतो मर्त्त्यो यावच्छेषः समाप्यते॥

---

(१) यत्र मृते सति।

अतीते सूतके प्रोक्तं सपिण्डानां त्रिरात्रकम्।
तथैव मरणे स्नानमूर्द्धं संवत्सराद्यदि॥

अतीते सूतक इति सूतकपदं शावाशौचाभिप्राय(क)म्। अतएवोर्द्धं संवत्सराद्यदि मरणश्रवणं तदा तथैव सपिण्डसम्बन्धितयैव स्नानमात्रमित्यत्र[1] मरण इति स्पष्टमुक्तम्।

एतच्च त्र्यहाशौचं ब्राह्मणब्रुवैर्दशाहाशौचिभिः सपिण्डैः कर्त्तव्यम्। निर्दशमिति लिखितमनुवचने तु अतिक्रान्तदशाहं[2] सपिण्डमरणं श्रुत्वा सचेलस्नानमात्रेणाङ्गास्पर्शनिवृत्त्या स्पृश्यो भवति।

बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते।
सवासा जलमाप्लुत्य सद्य एव विशुध्यति॥

इति मनुवचने तु देशान्तरस्थपदेनातीतदशाह-सपिण्डमरण-श्रवणे एकाहाशौचिनां सद्यःशौचमुक्तम्। पुत्रजन्म [2]चातिक्रान्त-दशाहं श्रुत्वा पितुः स्नानमात्रात् सर्व्वाशौचनिवृत्तिरित्यर्थः।

यथा [3]देवलः,—

नाशौचं प्रसवस्यास्ति व्यतीतेषु दिनेष्वपि।

अत्र च जननाशौचकालातिक्रमेणाशौचाभावस्योक्तत्वात् निर्दशं पुत्रजन्म श्रुत्वेत्यत्र मनुवचने पितुः स्नानमात्रं विधीयते।

---

(१) ख पुस्तके—इत्यर्थः।

(२) ख—पुस्तके अतिक्रान्ते दशाहे।

(३) क पुस्तके जाबालः।

मरणाशौचकालातिक्रमे तु त्रिरात्राद्यशौचविधानात् निर्दशं ज्ञातिमरणमित्यत्रास्पृश्यत्वमात्रनिवृत्तिः प्रतीयते।

देशान्तरस्थजननाशौचकालमध्येऽपि (तु) तस्य श्रवणे शेषाहोभिर्विशुद्धिमाह—

वृहस्पतिः,—

अन्यदेशमृतं ज्ञातिं श्रुत्वा पुत्त्रस्य जन्म च।
अनिर्गते दशाहे तु शेषाहोभिर्विशुध्यति॥

आत्मनः सपिण्डस्य वा पुत्त्रजन्म श्रुत्वेत्यर्थः।

यथा विष्णुः,—

श्रुत्वा देशान्तरस्थे जन्ममरणेऽशौचशेषेण शुद्ध्येत अतीते त्वशौचे संवत्सराभ्यन्तरे एकरात्रेण, अतःपरं स्नानमात्रेण।

अत्राविशेषितजन्मोपादानात् लिखितकूर्म्मपुराणवचने च सूतकमात्रग्रहणात् न स्वपुत्त्रजन्ममात्रश्रवणविषयता।

एकरात्रेण संवत्सरमध्ये शुद्धिः।

इति विष्णूक्तं केवलमन्त्रब्राह्मणात्मकवेदाध्यापनयुक्तानां [ केवलश्रौताग्नियुक्तानाञ्च ][1] त्र्यहाशौचिनाम्। अतःपरं संवत्सरात् परमित्यर्थः।

गौतमः,—

श्रुत्वा चोर्द्ध्वं दशम्याः पक्षिणीम्।

दशम्या रात्रेः परस्तात् सपिण्डमरणं श्रुत्वा दिनद्वयसहितां तन्मध्यगतां रात्रिमशौचं कुर्य्यादित्यर्थः।

---

(१) क ग पुस्तकद्वये [ ] चिह्नितांशः पतितः।

इदञ्च केवलस्मार्त्ताग्नियुक्तानां चतुरहाशौचिनामहरहर्मन्त्रमात्राध्यापकानां पञ्चाहाशौचिनाञ्च।

वेदाग्नियुक्तानामेकाहाशौचिनां दशरात्रोत्तरकालं सपिण्डमरणश्रवणे सद्यःशौचमाह—

गोतमः,—

बाल-देशान्तरित-प्रव्रजितानां सपिण्डानां सद्यःशौचम् ॥

यत्र मृतोऽशौचाभ्यन्तरे न श्रूयते तद्देशान्तरं तत्र मृतो देशान्तरित इति गोतमभाष्यकृताऽसहायेन व्याख्यातम्। बालादित्रितयं स्वस्थाने वक्ष्यामः।

अशौचकालातिक्रमे च सपिण्डमरणश्रवणे[1] चतुरहाद्यशौचिनां पक्षिण्यादिभिः सर्व्वाशौचनिवृत्तिरेव विशेषवचनाभावात्।

दशाहाशौचमध्ये तु वेदाग्न्यादिसंयुक्तानामेकाहाद्यशौचं क्रियाविशेषार्थमिति बहुतरवचनान्तरबलादाश्रितमित्युक्तमेव।

क्षत्रिय-वैश्य-शूद्राणामपि स्वकीयाशौचकालातिक्रमेण सपिण्डमरणश्रवणे त्रिरात्रमेवाशौचमाह—

शङ्खः,—

अतीते सूतके स्वे स्वे त्रिरात्रं स्यादशौचकम्।
संवत्सरे व्यतीते तु सद्यःशौचं विधीयते ॥

स्वे स्वे इति वीप्सा क्षत्रियादिवर्णत्रयव्याप्त्यर्थं वा।[2] तेन

---

(१) क ग पुस्तकद्वये श्रवणेपदं पतितम्।

(२) ख -मात्रवेदाध्ययनकारिणाम्।

(३) क ग पुस्तकद्वये वर्णत्रयाणामेव।

क्षत्रियादीनामपि स्वकीयाशौचकालातिक्रमे सपिण्डमरणश्रवणे त्रिरात्रं संवत्सरोपरि सपिण्डमरणश्रवणे सद्यःशौचमेव।

मातापित्रोस्तु संवत्सरोपरि मरणश्रवणे एकाहमाह—

देवलः,—

> अशौचाहःस्वतीतेषु बन्धुश्चेत् श्रूयते मृतः।
> तत्र त्रिरात्रमाशुच्यं भवेत् संवत्सरान्तरे॥
> ऊर्द्धं संवत्सराद्याद्बन्धुश्चेत् श्रूयते मृतः।
> भवेदेकाहमेवात्र तच्च सन्यासिनां न तु॥

संवत्सरान्तरे संवत्सरमध्ये बन्धुर्माता पिता च चकारात् पतिश्च स्त्रीणाम्।

दशाहाशौचिनां देवलोक्त एकाहः, त्र्यहाशौचिनां मनूक्तं स्नानमात्रमिति तु न युक्तम्। यतो येषां संवत्सरमध्ये त्र्यहाशौचं तेषामेव संवत्सरोपरि स्नानं मनुवचनेन प्रतीयते त्र्यहाशौचञ्च दशाहाशौचिनामित्यविवादमेव।

---

# अथ बालाद्यशौचम्।

याज्ञवल्क्यः,—

आदन्तजन्मनः सद्य आचूड़ान्नैशिकी स्मृता।

त्रिरात्रमा[1]व्रतादेशाद्दशरात्रमतःपरम्॥

आदन्तजन्मन इत्यौत्सर्गिकदन्तोत्पत्तिकालोपलक्षणार्थं षण्मासपर्य्यन्तमिति यावत्।

यदि तु दन्तोत्पत्तिरेव गृह्यते तदा यस्य नवमे मासि कृतचूड़स्य दशमासपर्य्यन्तमजातदन्तस्य चूड़ाकरणादूर्द्धं दन्तजननात् पूर्व्वं मरणं तस्याशौचेऽनध्यवसायः स्यात्।

अजातदन्तत्वात् सद्यःशौचम् कृतचूड़त्वात्त्रिरात्रमित्यन्यतरनिर्द्धारणे हेत्वभावः[2]।

तस्मात् षण्मासपर्य्यन्तं सद्यःशौचम्। एतच्च किञ्चिद्गुणहीनानां सगुणानाञ्च सपिण्डानां मातापित्रोरप्यत्यन्तोत्कृष्टगुणयोः।

यत्तु जावालवचनम्,—

व्रत-चूड़-द्विजानान्तु प्रतीतिषु यथाक्रमम्।

दशाहत्र्यहएकाहैः शुध्यन्त्यपि हि निर्गुणाः॥ इति

तत् पञ्चमे मासि दन्तोत्पत्तावेकरात्रम् प्रथमेऽब्दे चूड़ाकरणे त्रिरात्रं पञ्चमेऽब्दे उपनयने दशरात्रं विदधाति। अन्यथा याज्ञ-

---

(१) मूलपुस्तके आव्रतात्तेषां।

(२) क पुस्तके हेत्वभावात्।

वल्क्यवचनेनैव तदर्थसिद्धेः प्रतीतिष्विति विशेषणं मन्दप्रयोजनं स्यात्। द्विजानां दन्तानामित्यर्थः।

आचूड़ान्नैशिकीत्यत्रापि चूड़ाशब्देन—श्रौत्सर्गिकचूड़ाकालस्तृतीयवर्षो लक्ष्यते। प्रथमेऽब्दे तु कुलधर्म्मवशात्-अपवादतश्चूड़ाकरणविषयम्।

तेन षण्मासादूर्द्धं द्वितीयवर्षसमाप्तिपर्य्यन्तमेकरात्रं, एतच्च किञ्चिद्गुणहीनानां सगुणानाञ्च सपिण्डानाम्। अत्यन्तोत्कृष्टगुणानान्तु सपिण्डानां सद्यःशौचम्[१]। अत्यन्तनिर्गुणानां सपिण्डानां त्रिरात्रम्। अत्यन्तोत्कृष्टगुणयो र्मातापित्रोरेकरात्रं निर्गुणयोस्त्रिरात्रम्।

आव्रतादेशादित्यपि उपनयनकालग्रहणं तेन वर्षद्वयादूर्द्धं मासत्रयाधिकवर्षषट्कपर्य्यन्तं त्रिरात्रम्। अत ऊर्द्धं दशरात्रम्।

याज्ञवल्क्योक्त एव विषये कूर्म्मपुराणम्,—

आदन्तजननात्[२] सद्य आचूड़ादेकरात्रकम्।
त्रिरात्रञ्चोपनयनात् सपिण्डानामुदाहृतम्॥

तथा,—

प्राक् संस्काराच्चिरात्रं स्यात्तस्मादूर्द्धं दशाहिकम्।

किञ्चिद्गुणहीनयोर्मातापित्रोर्दन्तजन्मकालात् पूर्व्वमेकरात्रं अत ऊर्द्धं वर्षद्वयसमाप्तितः पूर्व्वं त्रिरात्रमिति।

---

(१) ख एकरात्रम्।
(२) ख पुस्तके आदन्तजन्मनः।

अत्र विषये कूर्म्मपुराणम्,—

[1]अदन्तजातमरणे पित्रोरेकाहमिष्यते।
दन्तजाते त्रिरात्रं स्याद्यदि स्यातान्तु निर्गुणौ॥

शङ्खलिखितौ,—

देशान्तरिते बाले[2] चातीते सद्यः शौचम्।
य ऊनत्रिवर्षः स्यादनुत्पन्नदन्तक इत्येके॥

त्रिवर्षो वर्त्तमानतृतीयवर्ष इत्यर्थः, तस्मादूनो द्वितीयवर्ष-समाप्तिपर्य्यन्तम्। एतच्चात्यन्तोत्कृष्टगुणानां सपिण्डानामित्युक्त-मेव। अनुत्पन्नदन्तेऽपि सद्यःशौचम् मातापित्रोः सपिण्डानाञ्च विषयभेदेन व्याख्यातमेव।

यमः,—

ऊनद्विवार्षिके बाले प्रेतत्वमनुगच्छति।
अदन्तजाततनये शिशौ गर्भच्युते[3] तथा॥
निवृत्तचूड़ाकरणे[4] देशान्तरमथो गते।
सपिण्डानाञ्च सर्व्वेषामेकरात्रमशौचकम्॥

ऊनत्रिवर्षे मृते किञ्चिद्गुणहीनसपिण्डानामेकरात्रम्। अजातदन्तमरणे निर्गुणानां सोदरादिसपिण्डानामेकरात्रम्।

(१) क अजातदन्त-।
(२) क पुस्तके बाले पदं नास्ति।
(३) ग शिशोर्गर्भच्युते।
(४) ख पुस्तके -चूड़के बाले।

गर्भपतने निर्गुणानां सपिण्डानामेकरात्रम्। [१]कृतचूड़मरणे उत्कृष्टगुणानां सपिण्डानामेकरात्रम्। देशान्तरगतेऽतिक्रान्त-दशाहमरणश्रवणे एकरात्रं विष्णुसमानविषयम्।

पैठीनसिः,—

अकृतचूड़ानां त्रिरात्रम्।

षण्मासोपरिवर्षद्वयाभ्यन्तरेऽकृतचूड़ानां मरणेऽत्यन्तनिर्गुणानां सपिण्डानां त्रिरात्रम्। [२][उत्कृष्टगुणानां सपिण्डानामेकरात्रम्]।

अस्मिन्नेव विषये वसिष्ठः—

ऊनद्विवर्षे प्रेते गर्भस्य पतने वा सपिण्डानां त्रिरात्रमशौचम् सद्यःशौचमिति गोतमः।

गर्भपतनविषये व्याख्यास्यते। सद्यःशौचमत्यन्तोत्कृष्टगुणानां सपिण्डानां व्याख्यातमेव।

पारस्करः,—

अद्विवर्षे प्रेते मातापित्रोरशौचमेकरात्रं त्रिरात्रं वा।

शरीरमदग्ध्वा निखनन्ति अन्तःसूतके चेदोत्थानादाशौचं सूतकवत्।

अद्विवर्षे प्रेते[३] मातापित्रो स्त्रिरात्रैकरात्रे निर्गुणत्व-सगुणत्वाभ्यां व्याख्याते।

---

(१) ग पुस्तके षण्मासान्तरितचूड़-।
(२) क पुस्तके चिह्नितांशः पतितः।
(३) ख मृते।

अन्तःसूतके जननाद्दशरात्राभ्यन्तरे चेद्बालकमरणं भवति तदा आ उत्थानात् सूतिकाया मातापित्रोरशौचं दशरात्रमिति यावत्, एतच्च सर्व्ववर्णसाधारणं तच्च सूतकवत् सूतकयुक्तमस्पृश्यत्वमुक्तमिति यावत्।

अन्यथा तु आउत्थानादित्यनेन सिद्धे सूतकवदित्यनर्थकं स्यात्।

सपिण्डानान्तु सद्यःशौचम्।

यथा शङ्खः—

बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति।
सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम्॥

सद्य एवेत्येवकारनिवर्त्तनीयोपसर्गनार्थमाह नाशौचं नैव सूतकमिति न मरणाशौचं नापि जननाशौचमित्यर्थः।

यत्तु—

जातमृते मृतजाते वा कुलस्य त्रिरात्रम्।

इति हारीतवचनादस्मिन् विषये सपिण्डानां त्रिरात्रमिति तदयुक्तम्। अस्य हारीतवचनस्य गर्भपतनाधिकारात् सप्तमाष्टममासीयगर्भपतनविषयत्वात्। गर्भपतने स्त्रीणां त्रिरात्रं साधीयो रजोविशेषत्वात्।

अतएव जातमृते मृतजाते वा कुलस्य त्रिरात्रमिति हारीतवचनम्—

कामधेनुकृता गर्भस्रावाशौचप्रकरणे लिखितम्॥

बालस्त्वन्तर्दशाहे त्विति तु शङ्खलिखितं अन्तर्दशाहग्रहणात् नवम-दशममासविषयम्।

अतो हारीतवचनस्यान्तर्दशाहमृतबालविषयता नास्त्येव अन्यथा शङ्खवचनं विरुध्येत।

यत्तु नाशौचं नैव[1] सूतकमित्यस्पृश्यत्वनिषेधपरं व्याख्यातं तदप्ययुक्तं न तावत् पितुरस्पृश्यत्वं निषिध्यते वक्ष्यमाणकूर्म्मपुराण-वचनविरोधात्।

न च सपिण्डानामस्पृश्यत्वाभावो[2] विधीयते तेषामस्पृश्यत्वा-प्रसक्तेः।

यच्चादिपुराणवचनम्—

सर्व्वं गोत्रमसंस्पृश्यं तत्र स्यात् सूतके सति।

मध्येऽपि सूतके दद्यात् पिण्डान् प्रेतस्य तृप्तये॥ इति

[3][ अत्र सूतके सतीति सूतकपदं अशौचमात्रपरं तथापि याव-द्दिनव्यापि जननाशौचं तन्मध्ये तावद्दिनव्यापिन्येव सूतकान्तरे सति गोत्रस्यास्पृश्यत्वम् ]।

[4]अनेन नान्तर्दशाहे बालमरणे सर्व्वगोत्रास्पृश्यत्वमुच्यते किन्तु तत्र स्यादिति तत्रशब्देन पूर्व्वश्लोकस्थं सूतकं परामृश्य एकस्मिन् सूतके द्वितीयसूतके तु समानदिनपतिते सर्व्वगोत्रा-स्पृश्यत्वमुच्यते।

---

(१) क ख पुस्तकद्वये न तु।

(२) ख अस्पृश्यत्वं तावत्।

(३) ख पुस्तके चिह्नितांशः [ ] अधिकः पाठः।

(४) क पुस्तके तत्र।

भिन्नदिनत्वे प्रथमेन द्वितीयस्य विशुद्ध्यभिधानात् समान-दिनत्वे तु विशेषहेत्वभावात् द्विगुणत्वाच्च सर्व्वगोत्रस्यास्पृश्यत्व-मुक्तम्।

यदि चान्तर्दशाहे बालमरणेऽपि सपिण्डानामस्पृश्यत्वमनेनोक्तं कथं शङ्खवचनेन निषिध्यते तस्यार्थं[1] किञ्चिदेतत्।

यतश्च दशाहादूर्द्धं षण्मासाभ्यन्तरे बालमरणे सद्यःशौचं याज्ञवल्क्यादिभिरुक्तम्। तेनापि ततोऽर्व्वाचीनस्याशौचं नास्तीति प्रतीयते।

यदि चान्तर्दशाहे बालकमरणे मातापित्रोरवशिष्टदिना-वध्यशौचे सति सपिण्डानां त्रिरात्रमिष्यते तदा दशमदिने बालकमरणे मातापित्रोस्तद्दिनमेवाशौचं सपिण्डानान्तु त्रिरात्र-मिति महद्वैषम्यं स्यात्।

यच्चोक्तं शावाशौचाभावादेव दशमदिनेऽपि बालमरणे सपिण्डानान्नाशौचवृद्धिरिति। तदयुक्तं—

जातमृते मृतजाते वा कुलस्य त्रिरात्रमिति हारीतवचनस्यैत-द्विषयत्वकल्पनया सपिण्डानां त्रिरात्रमभ्युपगतं तच्च दशम-दिनेऽप्यविशिष्टं किमत्र शावाशौचेन।

तस्माद्दशाहमध्ये बालमरणे सपिण्डानां सर्व्वाशौचाभाव इत्येतदेव साधु।

अतएव नवम-दशममासीयगर्भे मृतजाते सम्पूर्णाशौचमेव सपिण्डानाम्।

---

(१) क तस्मात्।

यतो यत्र सप्तमाष्टममासीयगर्भ[1]पाते जातमृते मृतजाते (वा) च सपिण्डानां लघुहारीतवचने त्रिरात्रं तत्र नवम-दशममासीय-गर्भे जातमृते मृतजाते च (वा) सपिण्डानां सुतरां सम्पूर्णाशौच-[2]मायाति शङ्खवचनबलादेव जातमृते सपिण्डानां सद्यःशौचं भवतु मृतजाते तु अशौचनिषेधकवचनाभावात् सम्पूर्णाशौचमेव युक्तम्।

कूर्म्मपुराणे व्यासः—

जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः।
मातुश्च सूतकं तत् स्यात् पिता त्वस्पृश्य एव च॥
सद्यःशौचं सपिण्डानां कर्त्तव्यं सोदरस्य च।
ऊर्द्धं दशाहादेकाहं सोदरो यदि निर्गुणः॥
अथोर्द्धं दन्तजननात् सपिण्डानामशौचकम्।
एकाहं निर्गुणानान्तु चौड़ादूर्द्धं [3]त्रिरात्रकम्॥
अदन्तजातमरणं सम्भवेद्यदि सत्तमाः।
एकरात्रं सपिण्डानां यदि तेऽत्यन्तनिर्गुणाः॥

अथोर्द्धं दन्तजननादित्यादि प्रागेव व्याख्यातविषयम्।

गौतमः—

दन्तजननादिति मातापितृभ्याम्।

दन्तजन्मकालात् षण्मासात् प्रभृति द्वितीयवर्षसमाप्तिपर्य्यन्तं बालमरणे मातापितृभ्यामशौचं कर्त्तव्यम्।

---

(१) ख गर्भे।
(२) ग पुस्तके अशौचे आयाते।
(३) क पुस्तके त्रिरात्रिकम्।

तत्राशौचमुत्कृष्टगुणाभ्यामेकरात्रम्, अपकृष्टगुणाभ्यां त्रिरात्रम्। सपिण्डानामुत्कृष्टगुणानामशौचं नास्त्येवेति मातापितृविशेषणार्थः।

अद्विवर्षे प्रेते मातापित्रोरशौचमित्यत्र पारस्करेऽविशेषश्रुतेऽपि दन्तजन्मादीति विशेषणं बोद्धव्यम्।

अङ्गिराः—

यद्यप्यकृतचूड़ोऽपि जातदन्तश्च संस्थितः।
तथापि दाहयित्वैनमशौचं त्र्यहमाचरेत्॥

अद्विवर्षस्यावश्यकदाहविधानाभावात् दाहयित्वेत्यनेन स्नेहप्राप्तं दाहमनूद्य त्र्यहाशौचं विधीयते।

तदयमर्थः—

यदि स्नेहाद्दाहः क्रियते तदा अद्विवर्षेऽपि दाहनिमित्तं त्र्यहाशौचम्।

एतच्चोत्कृष्टगुणयोर्मातापित्रोः किञ्चिदपकृष्टगुणानाञ्च सपिण्डानाम् स्नेहाद्दाहे सति।

इदं ब्राह्मणविषयम्। क्षत्रियादिष्वन्यथेति व्यक्तमाह—

आदिपुराणे,—

अनतीतद्विवर्षन्तु मृतं भूमौ निधापयेत्।
त्रिरात्रं बान्धवानाञ्च तस्याशौचञ्च सर्व्वशः[1]॥

---

(१) ख पुस्तके सर्व्वदा।

अनतीतद्विवर्षस्तु प्रेतो यत्रापि दह्यते।

अतिमोहाभिभूतैश्च देशसाधर्म्म्यमार्द्दवात्॥

अशौचं ब्राह्मणानान्तु त्रिरात्रं तत्र विद्यते।

राज्ञामेकादशाहन्तु वैश्यानां द्वादशाहिकम्॥

अपि विंशतिरात्रेण शूद्राणान्तु भवेत् क्रमात्।

सर्व्वेश इति मातापित्रोः सपिण्डानाञ्चोक्तेन विशेषेण प्रेतदाहत्वाविशेषात्। अद्विवर्षत्वेऽप्यावश्यको दाह इति प्रतिज्ञानं मोहः। देशसाधर्म्म्यं देशाचारः। मार्द्दवं स्नेहः। क्षत्रियादीनाञ्च द्विवर्षदाहनिमित्ता वाचनिक्यशौचवृद्धिः।

यादृक्गुणानां चतुर्णामपि वर्णानां दशाहाशौचमुक्तं तादृक्गुणानां त्रिरात्रम् द्विवर्षाधिकस्योपनयनकालात् पूर्व्वं मरणे वेदितव्यमित्यादिपुराणे दर्शितम्। उपनयनकालश्चोक्तः।

तद्यथा,—

अनुपनीतो विप्रस्तु राजा चैवाधनुर्ग्रहात्।

अगृहीतप्रतोदस्तु वैश्यः शूद्रस्त्ववस्त्रयुक्॥

म्रियते यत्र तत्र स्यादशौचं त्र्यहमेव हि।

द्विजन्मनामयं कालस्त्रयाणान्तु षडाब्दिकः।

पञ्चाब्दिकस्तु शूद्राणां स्वजात्युक्तमतःपरम्॥

क्षत्रिय-वैश्य-शूद्राणां दशाहाशौचाधिकारिणामेव षडब्दपञ्चमाब्दकालग्रहणम्।

स्वजात्युक्तमतः परमिति—

आशुच्यं दशरात्रं तु सर्व्वत्राप्यपरे विदुः।

इति देवलोक्तदशरात्रमस्य विषयः प्रागेवोक्तः।

अङ्गिराः,—

विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी।
द्व्यहेन क्षत्रिये शुद्धिः त्रिभिर्वैश्ये मृते तथा॥
निवृत्तचूड़के विप्रे त्रिरात्राच्छुद्धिरिष्यते।
तथैव क्षत्रिये षड्भिर्वैश्ये नवभिरिष्यते॥
शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पञ्चभिः।
अत ऊर्द्धं मृते शूद्रे द्वादशाहो विधीयते॥
षड्वर्षान्तमतीतो यः शूद्रः संम्रियते यदि।
मासिकन्तु भवेच्छौचमित्याङ्गिरसभाषितम्॥

त्रिभिर्वर्षैरुपलक्षितात् वर्त्तमानत्रिवर्षान्न्यून ऊनद्विवार्षिक इत्यर्थः। शूद्रे त्रिवर्षादित्यत्रापि त्रिवर्षो वर्त्तमानतृतीयवर्ष एव तस्मान्न्यून ऊनद्विवार्षिकः।

एतच्चापकृष्टगुणानां विप्रादीनां अत्यन्तापकृष्टगुणानान्तु विप्र-क्षत्रिय-वैश्यानां यथाक्रमं त्र्यहश्चतुरहः-पञ्चाहाः। शूद्रस्यात्यन्तापकृष्टगुणस्य सप्ताहः। अतएवादिपुराणोक्तात् पञ्चाब्दादधिकः षष्ठाब्दोऽवधिः[1] शूद्रस्य।

अस्मिन्नेव द्विवर्षाधिकविषये ऋष्यशृङ्गः,—

यत्र त्रिरात्रं विप्राणामशौचं सम्प्रदिश्यते।
तत्र शूद्रे द्वादशाहः षस्नव क्षत्र-वैश्ययोः॥

---

(१) क पुस्तके अधिकः।

त्र्यहात् शुद्ध्यन्तीत्यनुवृत्तौ शङ्खः,—

अनूढ़ानान्तु कन्यानां तथा वै शूद्रजन्मनाम्।
अनूढ़भार्य्यः शूद्रस्तु षोड़शाद्वत्सरात् परम्॥
मृत्युं समधिगच्छेत्तु मासं[1] तस्यापि बान्धवाः।
शुद्धिं समधिगच्छन्ति नात्र कार्य्या विचारणा॥

अनूढ़ानान्तु कन्यानां वाग्दत्तानामिति स्वाशौचे वक्ष्यते। शूद्रजन्मनामजातदन्तानां मरणे त्रिरात्रम्। अङ्गिरसा षड्वर्षपर्य्यन्तं शूद्रमरणे द्वादशाहमुक्त्वा षड्वर्षोपरि मासाशौचमुक्तम्।

अत्र शङ्खवचने षोड़शवर्षपर्य्यन्तं द्वादशाहः, तदुपरि मासाशौचम्। तदेतत् पञ्चदशाहाशौचाधिकारिणः शूद्रस्य षोड़शवर्षपर्य्यन्तं द्वादशाहेन सर्व्वाशौचनिवृत्तिं दर्शयति।

षोड़शवर्षोपरि पञ्चदशाहेन ब्राह्मणशुश्रूषाधिकारी मासेन सर्व्वाशौचनिवृत्तिरिति।

---

(१) क पुस्तके मासात्।

---

## अथ स्त्र्यशौचम् ।

मनुः,—

स्त्रीणामसंस्कृतानान्तु त्र्यहात् शुध्यन्ति बान्धवाः[1] ।

यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः ॥

असंस्कृतानामकृतपाणिग्रहणसंस्काराणां बान्धवा भर्त्तृपक्षाः [ यथोक्तेनैव कल्पेन प्रथमार्द्धोक्तेन ][2] त्रिरात्रेण शुध्यन्ति वाग्दानात् प्रभृति वाग्दानव्यतिरेकेण भर्त्तृपक्षैः सह सम्बन्धाभावात् सनाभयः पितृपक्षाः-यथोक्तेनैव कल्पेन प्रथमार्द्धोक्तेन त्रिरात्रेण शुध्यन्तीत्यर्थः ।

एतदेव वाग्दानात् पूर्व्वं चूड़ाकरणात् प्रभृति कन्यामरणे एकाहोरात्रमाह—

याज्ञवल्क्यः,—

अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।

बालेषु चेत्यजातदन्तेषु । यद्यपि याज्ञवल्क्येन सद्यो विशुद्धिरुक्ता तथापीदं निर्गुणानाम् ।

शङ्ख-लिखितौ—

एकाहं कन्यायामूढ़ायां पुनर्गोत्रतः पिण्डाशौचयोर्निवृत्तिः ।

कन्यायामकृतवाग्दानायां ऊढ़ायां विवाहितायां पुनर्गोत्रतः पितृकुले पिण्डनिवृत्तिरशौचनिवृत्तिश्च । भर्त्रैव[3] त्र्याहमशौचञ्च

(१) क पुस्तके मानवाः ।

(२) [ ] ख ग पुस्तकद्वये चिह्नितांशः पतितः ।

(३) ख पुस्तके तत्रैव ।

कर्त्तव्यं न पित्रादिभिरित्यर्थः। पित्रादीनामशौचं नास्तीति-व्यक्तमाह।

विष्णुः,—

स्त्रीणां विवाहः संस्कारः। संस्कृतासु स्त्रीषु नाशौचं पितृ-पक्षे। तत्प्रसवमरणे पितृगृहे चेद्भवेतां तदैकरात्रं त्रिरात्रं वा।

पितृगेहे प्रसवे मरणे सति भ्रात्रादीनामेकरात्रं पितुस्त्रिरात्रं मातुश्च जनककर्त्तृत्वाविशेषात्।

कूर्म्मपुराणे,—

गृहे मृतासु दत्तासु कन्यासु त्र्यात्त्र्यहं पितुः।

मृतासु चेति प्रदर्शनार्थं प्रसूतासु चेत्यपि बोद्धव्यम्।

मनु-याज्ञवल्क्य-शङ्खलिखित-विष्णु-कूर्म्मपुराणवचनानां यथा-व्याख्यातोऽर्थो व्यक्तमादिपुराणे दर्शितः।

तद्यथा,—

दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथवा।
स्वमशौचं चरेत् सम्यक् पृथक्स्थाने व्यवस्थिता॥
तद्बन्धुवर्गस्त्वेकेन शुध्येत्तु जनकस्त्रिभिः।
आजन्मनस्तु चूड़ान्तं यत्र कन्या विपद्यते॥
सद्यःशौचं भवेत्तत्र सर्व्ववर्णेषु नित्यशः।
ततो वाग्दानपर्य्यन्तं यावदेकाहमेव हि॥
अतःपरं प्रवृद्धानां त्रिरात्रमिति निश्चयः।
वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम्॥

पितुर्वरस्य च ततो दत्तानां भर्त्तुरेव हि।
स्वजात्युक्तमशौचं स्यात् सूतके मृतके तथा॥
पित्रा दत्ता तु याऽन्यस्मै स्वातन्त्र्यादन्यमाश्रिता।
यं संश्रितवती भूयस्तस्याशौचं भवेत्त्र्यहम्॥
मृतायां वा प्रसूतायां नान्येषामिति निश्चयः।
पदे तु सप्तमे या तु बलात् काचिद्धृता भवेत्॥
स्वामिगोत्रं भवेत्तस्यास्तच्च भूयो विशिष्यते।
पैतृकान्वप्रसूतायां ततः पौर्व्विकभर्त्तृकम्॥
कामादक्षतयोनिश्चेदन्यं गत्वा व्यवस्थिता।
तस्यान्यस्य सगोत्रा स्याद्यं संश्रितवती[1] स्वयम्॥

पितुस्तद्गेहे यदा सूयते म्रियते वा तदा स्वमशौचं भर्त्तृ-सम्बन्धिदशरात्रादिकं कुर्य्यात्। पृथक् स्थाने पितुः शयन-भोजन-देवार्च्चनव्यतिरिक्ते गृहे व्यवस्थिता तद्बन्धुवर्गो भ्रात्रादि[2]रेकाहात् शुध्यति, जनकः पिता त्र्यहात् शुध्यति जनकतुल्यन्यायतया[3] जनन्यपि त्र्यहात् शुध्यति।

सर्व्ववर्णेष्विति—क्षत्रिय-विट्-शूद्राणामपि नित्यश इति गुण-हीनेऽपि प्रवृद्धानामिति अक्षतवाग्दानावस्थातः परं प्रामाधिक-रूपाणामित्यर्थः।

---

(१) क ग पुस्तकद्वये बलात् श्रितवती।

(२) क गोत्रादिः।

(३) ख तुल्यतया।

अधिकं रूपं व्यक्तीकरोति वाग्दाने कृत इति। उभयत इति व्याकरोति पितुर्वरस्य चेति, ततो वाग्दानात् परं दत्तानां सप्तपदीकरणानन्तरम्—

गृह्णामि ते सौभगत्वाय हस्तम्।

इत्यादिभिः षड्भिर्मन्त्रैः कृतपाणिग्रहणानां भर्त्तुरेव कुलेऽशौचं न पितृकुले।

नान्येषामिति—यं संश्रितवती तस्य पुत्र-भ्रातृप्रभृतीनां नाशौचमित्यर्थः।

सप्तपदीकरणानन्तरं पाणिग्रहणं गृह्योक्तं, यद्यत्र सप्तपदीगमने कृते काचिदन्येन बलात्कारेण गृहीता[१] पाणिग्रहणं कर्त्तुं न दत्तमित्यर्थः।

कृते वा तत्र समन्त्रकपाणिग्रहणाभावेऽपि सप्तपदीकरणकर्त्तुरेव स्वामित्वात्तस्यास्तदीयमेव गोत्रम्भवति सप्तपदीकरणस्यापि समन्त्रकपाणिग्रहणवत् स्वामित्वोत्पत्ति[२]हेतुत्वात्।

यथाह मनुः,—

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे॥

नियतमिति पत्नीत्वापादकमित्यर्थः। अन्यत्तु सर्व्वमनुग्राहकमात्रम्। अत्रापि पुनर्विशेषमाह—तच्च भूयो विशिष्यते इति यावत्तस्याः प्रसवो न भवति तावत् पितुरेव गोत्रं प्रसवोपरि

(१) ख ग -हृता।

(२) ख पुस्तके स्वामित्वापत्ति-।

पौर्व्विकस्य भर्त्तुः सप्तपदीमात्रकर्त्तुर्गोत्रम्। स्वातन्त्र्यादन्यमाश्रितायास्तु कतमद्गोत्रमित्यपेक्षायामाह कामादित्यादि। क्षतयोनित्वे तु यस्मिन् पित्रा दत्ता तद्गोत्रेणैवेत्यर्थः।

चूड़ापर्य्यन्तं सद्यो वाग्दानपर्य्यन्तमेकमहः पाणिग्रहणपर्य्यन्तं त्रिरात्रं तदुपरि पितृकुलेऽशौचाभाव इति—

कूर्म्मपुराणे व्यासः,—

स्त्रीणामसंस्कृतानान्तु प्रदानात् परतः सदा।
सपिण्डानां त्रिरात्रं स्यात् संस्कारे भर्त्तुरेव च (हि)॥
अहस्त्वदत्तकन्यानामशौचं मरणे स्मृतम्।
ऊनद्विवर्षान्मरणे सद्यःशौचमुदाहृतम्॥

ऊनद्विवर्षपदेनादिपुराणीयमाजन्मनस्तु चूड़ान्तमिति चूड़ापदं द्वितीयवर्षसमाप्तिपर्य्यन्तकालोपलक्षकमिति दर्शितम्।

आजन्मनस्तु चूड़ान्तमित्यत्र निर्गुणस्य सोदरस्य विशेषः कूर्म्मपुराणे उक्तः।

तद्यथा,—

आदन्तात् सोदरे सद्य आचूड़ादेकरात्रकम्।
आप्रदानात्त्रिरात्रं स्याद्दशरात्रमतःपरम्॥

दशरात्रमतःपरमिति भर्त्तुरेव ह्रीत्येतद्विषयम्। अशौचावधिभूतकालस्यानुक्तत्वात् एवकारेण पितृपक्षाशौचस्य [1]व्यावृत्तत्वादिति।

---

(१) ख ग पुस्तकद्वये व्यावर्त्तितत्वात्।

# अथ वर्णसन्निपाताशौचम् ।

दक्षः,—

वर्णानामानुपूर्व्व्येण[1] स्त्रीणामेको यदा पतिः ।
दशाह-षट्-त्र्यहैकाहाः प्रसवे सूतकं भवेत् ॥

वर्णानां ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां चतुर्णां जन्यत्वेन सम्बन्धिनीनां स्त्रीणां एभिर्जातानामिति यावत् ।

यदेको ब्राह्मणः पतिः आनुपूर्व्व्येण क्रमेण किमुक्तं भवति—

प्रथमं ब्राह्मणीं परिणीय पश्चात् क्रमेण क्षत्रियाद्यास्तिस्रो यदा परिणीयन्ते तदा आसां प्रसव-मरणयोर्यथाक्रमं दश-षट्-त्र्यहैकाहा अशौचम् ।

यदा व्युत्क्रमेण प्रथमं क्षत्रिय-वैश्या-शूद्राणामन्यतमां परिणीय पुनरपरवर्णत्रयकन्याः परिणीयन्ते—

तदा बृहस्पतिः—

शुध्येद्विप्रो दशाहेन जन्महान्योः स्वयोनिषु ।
सप्त-पञ्च-त्रिरात्रैश्च क्षत्र-विट्-शूद्रयोनिषु ॥

अस्य च बृहस्पतिवचनस्य व्युत्क्रमविवाहविषयत्वं दक्षवचने 'आनुपूर्व्व्यो'ग्रहणादेव प्रतीयते । अन्यथा तदनर्थकमेव स्यात् ।

न तावदानुपूर्व्व्येण[2] ये वर्णास्तज्जातानां स्त्रीणामेको यदा

---

(१) मूले आनुलोम्येनेति पाठः ।
(२) ख आनुपूर्व्व्येण विवाहग्रहणादेव ।
(३) ख पुस्तके न तु वेदानुपूर्व्व्येण ।

पतिरिति वक्तुमुचितं आनुपूर्व्वस्याव्यभिचारलब्धस्याभिधानानर्थ-क्यात्। नापि दशरात्रादिभिरानुपूर्व्वस्य सम्बन्धो यथासंख्येनैव सिद्धे व्यवहितकल्पनादोषाच्च ।

तस्माद्यदानुपूर्व्व्येण पतिरित्येतदेव विवक्षितं आनुपूर्व्व्येण च पतित्वमानुपूर्व्वविवाहाद्भवति ।

तेनानुपूर्व्वविवाहविषयं दक्षवचनं, बृहस्पतिवचनन्तु व्युत्क्रम-विवाहविषयम्। व्युत्क्रमविवाहस्य निषिद्धत्वात् प्रायश्चित्तानु-ष्ठानाच्च निन्दितत्वम्। अतस्तत्राशौचातिरेको[१] युज्यत एव ।

विष्णुः,—

ब्राह्मणस्य क्षत्रिय-वैश्य-शूद्रेषु सपिण्डेषु षड्रात्र-त्रिरात्रैक-रात्रैः। क्षत्रियस्य विट्-शूद्रयोः षड्रात्र-त्रिरात्राभ्याम्। वैश्यस्य शूद्रेषु षड्रात्रेण ।

एतेनैतदुक्तं भवति—अनन्तरवर्णे षड्रात्रं, एकान्तरे त्रिरात्रं, द्व्यन्तरे एकरात्रं दक्षवचनसमानञ्चेदम् ।

आदिपुराणे,—

बान्धवेषु च विप्रस्य क्षत्र विट्-शूद्रजातिषु ।
मृतेषु वाथ जातेषु दशाहाच्छुद्धिरिष्यते ॥
देशधर्म्मप्रमाणत्वात् षड्रात्रं क्षत्रियेष्वथ ।
त्रिरात्रमपि वैश्येषु शूद्रेष्वेकाहमेव च ॥

---

(१) ख ग पुस्तकद्वये अशौचविवेकः ।

क्षत्रियस्याथ वैश्यस्तु वैश्यस्य वृषलस्तथा ।
म्रियते जायते बन्धुस्तत्राशौचं स्वकञ्चरेत्[१] ॥
शूद्रा-वैश्या-क्षत्रियासु क्रमादुत्तमजातिषु[२] ।
बान्धवेषु चरन्त्यत्र यत्संख्यन्तेषु विद्यते ॥

षड्रात्रं क्षत्रियेष्वित्यादिना शूद्रेष्वेकाहमित्यन्तेन दक्षोक्तविषयेऽशौचमुक्तं । बान्धवेषु च विप्रस्येत्यादिना देशधर्म्मप्रमाणत्वादित्यन्तेन देशविशेषस्य व्यवस्थितमिदमशौचमिति स्वयमेवोक्तम् ।

अत्रैव विषये कूर्म्मपुराणे,--

क्षत्र-विट्-शूद्रदायादा ये स्युर्विप्रस्य बान्धवाः ।
तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥
राजन्य-वैश्यावप्येवं हीनवर्णासु योनिषु ।
[३][ स्वमेव शौचं कुर्य्यातां विशुद्धयर्थं न संशयः ॥
सर्व्वे तूत्तमवर्णानां शौचं कुर्य्युरतन्द्रिताः ।
तद्वर्णविधिदृष्टेन स्वन्तु शौचं स्वयोनिषु ॥ ]

क्षत्र-विट्-शूद्राणां जननमरणयोर्ब्राह्मणस्य देशभेदव्यवस्थितमादिपुराणोक्तं दशाहाशौचम् प्रथमश्लोकेनाभिधाय वैश्यशूद्रयोर्जननमरणे च क्षत्रियस्य द्वादशाहं शूद्रायाः प्रसवमरणयोर्वैश्यस्य पञ्चदशाहमशौचं देशभेदव्यवस्थितमेवोक्तम् ।

---

(१) ख स्वकं भवेत् ।
(२) क क्रमाद्वर्णमजातिषु ।
(३) ग पुस्तके [ ] चिह्नितांशः पतितः ।

[1]अतएव सर्व्वं सङ्क्षेपेणोपसंहृत्योक्तं सर्व्वे तूत्तमवर्णानामित्यादि [2]स्वमशौचं स्वयोनिष्विति स्वयोनिषु समानजातीयासु स्वमिति स्वजात्युक्तमित्यर्थः।

क्षत्रियस्याथ वैश्यस्तु-इत्यादिके तु आदिपुराणवचने क्षत्रियस्य वैश्याप्रसवमरणयोर्द्वादशाहं वैश्यस्य शूद्रा[3]प्रसवमरणयोः पञ्चदशाहं देशभेदव्यवस्थितं प्रदर्शितम्।

शूद्रा[4]वैश्या इत्यादिना तु ब्राह्मण्याः सपत्न्याः प्रसवमरणयोः क्षत्रियाद्यास्तिस्रस्त्रयोदशाहमशौचं कुर्य्युः।

क्षत्रियायाः सपत्न्याः प्रसवमरणयोः—वैश्याशूद्रे क्षत्रियपरिणीते द्वादशाहं कुर्य्यातां वैश्यायाः सपत्न्याः प्रसवमरणयोर्वैश्योढा शूद्रा पञ्चदशाहम् कुर्व्वीतेत्युक्तम्।

एतदेव व्यक्तमाह विष्णुः,—

हीनवर्णानामधिकवर्णेषु सपिण्डेषु तदशौचव्यपगमे शुद्धिः।

तदशौचव्यपगमे इति अधिकवर्णाशौचसमाप्तावित्यर्थः।

कूर्म्मपुराणे,—

षड्रात्रञ्च त्रिरात्रं स्यादेकरात्रं क्रमेण हि।
वैश्य-क्षत्रिय-विप्राणां शूद्रेष्वाशौचमेव च॥

---

(१) ख तदेवं।
(२) ख—ग स्वन्तु शौचं।
(३) ख सूद्रस्य।
(४) ख क्षत्रियापदमधिकं।

अर्द्धमासोऽथ षड्रात्रं त्रिरात्रं द्विजपुङ्गवाः।
शूद्र-क्षत्रिय-विप्राणां वैश्येष्वाशौचमिष्यते॥
षड्रात्रद्वादशाहञ्च विप्राणां वैश्यशूद्रयोः।
अशौचं क्षत्रिये प्रोक्तं क्रमेण द्विजपुङ्गवाः॥
शूद्र-विट्-क्षत्रियाणान्तु ब्राह्मणे संस्थिते सति।
दशरात्रेण शुद्धिः स्यादित्याह कमलोद्भवः॥

वैश्यपरिणीतशूद्राप्रसवे तस्याश्च मरणे तत्पुत्रमरणे च वैश्यस्य षड्रात्रमशौचं क्षत्रियपरिणीतशूद्राप्रसवे तस्याश्च मरणे तत्पुत्रमरणे च क्षत्रियस्य त्रिरात्रम्।

[1][ ब्राह्मणपरिणीतशूद्राप्रसवे तस्याश्च मरणे तत्पुत्रमरणे च ब्राह्मणस्यैकरात्रम्। वैश्यमरणे वैश्यपरिणीतवैश्याप्रसवे तन्मरणे च तत्पुत्रमरणे च वैश्यपरिणीतशूद्रायास्तत्पुत्रस्य च पञ्च-दशाहमशौचम्।

क्षत्रियपरिणीतवैश्याप्रसवे तन्मरणे च तत्पुत्रमरणे च क्षत्रियस्य षड्रात्रम् ]।

ब्राह्मणपरिणीतवैश्याप्रसवे तस्या मरणे तत्पुत्रमरणे च ब्राह्मणस्य त्रिरात्रम्।

ब्राह्मणपरिणीतक्षत्रियाप्रसवे तस्या मरणे तत्पुत्रमरणे च ब्राह्मणस्य षड्रात्रमशौचम्।

क्षत्रियस्य मरणे क्षत्रियपरिणीतक्षत्रियाप्रसव-मरणयोश्च

(१) ग पुस्तके [ ] चिह्नितांशः पतितः।

क्षत्रियापुत्रस्य च मरणे क्षत्रियपरिणीतवैश्यास्तत्पुत्राः क्षत्रियपरिणीतशूद्रास्तत्पुत्राश्च द्वादशाहं कुर्य्युः ।

ब्राह्मणमरणे ब्राह्मणपरिणीतब्राह्मणी-प्रसवमरणयोश्च तत्पुत्रमरणे च ब्राह्मणपरिणीतानां क्षत्रिया-वैश्या-शूद्राणां तत्पुत्राणाञ्च दशरात्रमशौचम् ।

आपस्तम्बः,—

क्षत्र-विट्-शूद्रजातीनां येऽपि स्युर्मृतसूतके ।
तेषान्तु पैतृकं शौचं विभक्तानान्तु मातृकम् ॥

ब्राह्मणपरिणीतानां क्षत्रिया-वैश्या-शूद्राणां पुत्राः पित्रा सहैकत्र वसन्तः स्वीय-स्वीय-मातुः प्रसव-मरणयोश्च पितृसम्बन्धिदशाहमेवाशौचं कुर्य्युः ।

पित्रा सहकृतविभागास्तु तयोरेव निमित्तयोः स्वीयस्वीयमातृजात्युक्तमशौचं कुर्व्वीरन् । यथा विभागेऽशौचं तथैव पितृमरणेऽपीत्याह जावालः—

नानाजातिषु पारक्ये पैतृकं जीवतः पितुः ।
अतीते मातृकं विद्यात् पारक्यमुभयोरपि ॥

एकपुरुषपरिणीतासु नानाजातीयासु स्त्रीषु मध्ये पारक्ये परिणेतृजातितः परा अन्या या जातिस्तज्जातीयायाः प्रसवे मरणे च तज्जातीयाया[1] एव पूर्व्वोत्पन्नः पुत्रः पितरि जीवति पितृजात्युक्ताशौचं कुर्य्यात् । अतीते तु पितरि मातृजात्युक्तम् ।

---

(१) ग तस्या एव ।

एवं पितृजीवन मरणयोरुभयोरपि पक्षयोः पारक्यमेवाशौचं भवति पितृजीवने मातृजातितः पारक्यं पितृमरणेऽपि पितृजातितः पारक्यमिति ।

एतच्च पारक्यमशौचं हीनवर्णेन पुरुषेणोत्तमवर्णासु जातानामत्र न भवतीत्याह विष्णुः—

पत्नीनां दासानामानुलोम्येन स्वामितुल्यमशौचं मृते स्वामिन्यात्मीयम् ।

दासानां प्रातिलोम्यं तदा भवति यद्युत्कृष्टवर्णो हीनवर्णस्य दास्यं करोति तादृशस्य दासस्य स्वामितुल्यमशौचं नास्ति किन्तूत्कृष्टवर्णानां दासानां हीनवर्णानां स्वीयप्रसवमरणयोः स्वामितुल्याशौचभागिता ।

एतच्च स्वामिना सहैकत्र वासे भवतीत्याह बृहस्पतिः—

दासान्तेवासि-भृतकाः शिष्याश्चैकत्रवासिनः ।
स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके ॥

अन्तेवासी प्रागेव व्याख्यातः । भृतको भक्तदासः ।

स्वामिनः प्रसवमरणयोर्दासानां स्वामितुल्यमशौचं दासाशौचन्तु न स्वामिनोऽपीति—

कारणाद्गच्छति प्रेष्यं तदाशुच्यं न तान् व्रजेत् ।

इति पूर्व्वलिखितदेवलवचनात् । कारणञ्च सहवासप्रभृति प्रागेवोक्तम् ॥

---

# अथाशौचसङ्करः।

मनुः,—

अन्तर्दशाहे स्यातांचेत् पुनर्मरणजन्मनी।
तावत् स्यादशुचिर्विप्रो यावत्तत् स्यादनिर्दशम्॥

पुनर्मरणञ्च जन्म च पुनर्मरणजन्मनी पुनःशब्दो मरणमात्र-विशेषणं न जन्मनोऽपि उभयविशेषणवैयर्थ्यात्।

तेनैतदुक्तम् भवति—

[1]यदा पुनः प्रवृत्तमरणाशौचस्यानिवृत्ते दशाहे मरणान्तरं भवति तदा पुनर्मरणं जननमध्ये तु पुनर्मरणं न भवति एवञ्च मरणाशौचदशाहमध्ये यदि मरणान्तरं जननं वा तदा प्रथमाशौचसमाप्त्या शुद्धिः।

तेन,—

समानं लघु चाशौचं पूर्व्वेणैव विशुध्यति।

इति दर्शितं भवति न गुरु। अतो मरणाशौचमध्ये यदि मरणान्तरं भवति जननं वा तदा पूर्व्वेणैव शुद्धिर्भवति। न तु जननमध्ये मरणे सति जननेन शुद्धिर्मरणस्य गुरुत्वात्—

मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्।

इति देवलवचनाच्च मरणस्य गुरुत्वम्।

जननेन मृतकं न शुध्यतीति स्पष्टमाह—

---

(१) ख यदि पूर्व्वप्रवृत्त-।

लघुहारीतः,—

मृतके सूतकं चेत् स्यात् सूतके मृतकं तथा।
मृतेन सूतकं गच्छेन्नेतरत् सूतकेन तु॥

समानजातीयतया जननाशौचमध्ये यदि जननाशौचं भवति तदा पूर्व्वेणैव शुद्धिरिति सिद्धमेव।

तत्र स्पष्टमाह[1] विष्णुः,—

जननाशौचमध्ये यद्यपरं जननाशौचं स्यात्तदा पूर्व्वाशौचव्यपगमे शुद्धिः, रात्रिशेषे दिनद्वयेन प्रभाते दिनत्रयेण मरणाशौचे त्वातिमरणेऽप्येवम्।

रात्रिः शेषोऽवशिष्टा यस्य दशरात्रस्य तत् रात्रिशेषं दशमदिनादित्योदयकालादूर्द्धमिति यावत्।

दिनद्वयेनेति दशमदिनादधिकेन दिनद्वयेन। प्रभाते दशम्या रात्रेः शेषे प्राच्यां दिशि किञ्चिल्लौहित्यदर्शनात् प्रभृति सूर्य्योदयात् पूर्व्वमित्यर्थः।

दशमदिनादधिकेन दिनत्रयेण। रात्रिशेषपदेन दशमदिनादादित्योदयकालादूर्द्धमिति यदुक्तम्।

तदाह बौधायनः—

अथ यदि दशरात्राः सन्निपतेयुराद्यं दशरात्रमशौचमानवमाद्दिवसात्।

आनवमान्नवमदिनपर्य्यन्तमाङोऽभिविध्यर्थत्वात्।

---

(१) ख विशेषमाह।

कूर्म्मपुराणे,—

यदि स्यात् सूतके सूतिर्मृतके वा मृतिर्भवेत्।
शेषेणैव भवेच्छुद्धिरहःशेषे द्विरात्रकम्॥
मरणोत्पत्तियोगे तु मरणाच्छुद्धिरिष्यते।

मरणोत्पत्तीत्यत्र पूर्व्वपश्चाद्भावानुपादानान्मरणात् पूर्व्वं वा जननं भवेत् तदुत्तरकालं वा उभयथाऽपि मरणाशौचादेव शुद्धिः।

एवञ्चाङ्गिरोवचने पश्चात्पदोपादानेऽप्ययमेवार्थो बोद्धव्यः।

यथाङ्गिराः,—

अनिर्दशाहे जनने पश्चात्स्यान्मरणं यदि।
प्रेतमुद्दिश्य कर्त्तव्यं तत्राशौचं स्वबन्धुभिः[1]॥

यदा पश्चाद्भाविन्यपि मरणे मरणाच्छुद्धिस्तदा पूर्व्वभाविन्यपि मरणे सुतरां शुद्धिरित्युक्तं भवति।

तथाचाघवृद्धिमत्त्वान्मरणाशौचं गुरु जननाशौचादित्यतः पश्चाद्भाविनाऽपि गुरुणा मरणाशौचेन पूर्व्वोत्पन्नेऽपि जनने शुद्धिरेवं जननयोर्मध्ये यज्जननं गुरु तद्यदि पश्चाद्भवति तदनेन, न लघुना पूर्व्वाशौचेन शुद्धिः किन्तु पश्चाद्भाविनाऽपि गुरुजननाशौचेन।

एवं द्वयोर्मरणयोर्मध्ये यन्मरणं गुरु तेन पश्चाद्भाविनाऽपि पूर्व्वभाविनोऽपि लघुनो मरणाशौचस्य शुद्धिरित्याह—

---

(१) क न बन्धुभिः।

यम:--

अघवृद्धावशौचन्तु पश्चिमेन समापयेत्।

अस्ति च सपिण्डजननाशौचात् स्वीयपुत्रजननाशौचस्याघवृद्धिमत्त्वं यतः पुत्रजनने स्नानात् पूर्व्वं पितुरस्पृश्यत्वं न तु सपिण्डानाम्।

तथा पुत्रजनने पितुः सूतिकास्पर्शे दशाहमस्पृश्यत्वं[1] सपिण्डानान्तु स्नानमात्रम्। तथा दशरात्रादूर्द्धमपि पुत्रजन्मश्रवणे पितुःस्नानं न सपिण्डानाम्।

तथा सपिण्डमरणान्मातापित्रोर्मरणमघवृद्धिमत्। यतो मातापित्रोर्मरणे द्वादशरात्रमक्षारलवणान्नाशनं [2]सपिण्डानाञ्च त्रिरात्रम्।

तथा पत्नीनां सपिण्डमरणान्महागुरोः पत्युर्मरणमघवृद्धिमत् यतः श्रीरामायणे सीतां प्रत्यनुसूयावाक्यम्—

नातो विशिष्टं पश्यामि बान्धवं वै कुलस्त्रियाः।
पतिर्बन्धुर्गतिर्भर्त्ता दैवतं गुरुरेव च॥

पश्चिमेन समापयेदित्यत्र विशेषमाह—

देवलः,—

परतः परतः शुद्धिरघवृद्धौ विधीयते।
स्याच्चेत् पञ्चतमादह्नः पूर्व्वेणैवानुशिष्यते॥

---

(१) ख पुस्तके अशौचं।
(२) ख सपिण्डमरणे तु।

परतः परत इति वीप्सा-जननापेक्षया जननस्य यथोक्ताघवृद्धौ मरणापेक्षया मरणस्येत्युभयव्याख्यर्थां।

परतः शुद्धिं विशेषयति स्याच्चेदिति पञ्चतमादह्नः पूर्व्वपञ्च-दिनाभ्यन्तर इति यावत्।

यद्येवम्विधमघवृद्धिमदाशौचं भवति तदा पूर्व्वेणैव शुद्धि-र्भवति।

ततश्च पश्चिमेन समापयेदिति परतः परतः शुद्धिरिति पञ्च-दिनादूर्द्धं दशाहपर्य्यन्तं बोद्धव्यम्।

एवञ्च रात्रिशेषे दिनद्वयेन प्रभाते दिनत्रयेणेति सपिण्ड-जननद्वये सपिण्डमरणद्वये चावतिष्ठते[1]।

शङ्खः,—

समानाशौचं प्रथमे प्रथमेन समापयेत्।
असमानं द्वितीयेन धर्म्मराजवचो यथा॥

समानाशौचं जनने जननमुक्ताघवृद्धियुक्तं मरणे मरणमुक्ताघ-वृद्धिमदुक्तमेव। प्रथमेऽशौचकालस्य भागद्वये पञ्चाहाभ्यन्तरे प्रथमेन समापयेत्। असमानं सूतके मरणं द्वितीयेन मरणेन समापयेदित्यनुषङ्गः।

प्रथमे भागद्वये इति यदुक्तं तद्ब्रह्ममाहादिपुराणे—

आद्यं भागद्वयं यावत् सूतकस्य तु सूतके।
द्वितीये पतिते चाद्यात् सूतकाच्छुद्धिरिष्यते॥

---

(१) क व्युपतिष्ठते।

अत ऊर्द्धं द्वितीयात्तु सूतकान्तात् शुचिः स्मृतः।
एवमेव विचार्य्यं स्यात् मृतके सूतकान्तरे॥
मृतकस्यान्तरे यत्र सूतकं प्रतिपद्यते।
सूतकस्यान्तरे वाथ मृतकं यत्र विद्यते।
मृतकान्ते भवेत्तत्र शुद्धिर्वर्णेषु नित्यशः॥

दशरात्रेऽशौचकाले चतुर्द्धाविभक्ते भागद्वयं पञ्चदिनानि भवन्ति अत्र यद्यपि प्रथमसूतकस्याद्यभागद्वयमध्ये द्वितीये सूतके पतिते इत्यविशेषेण श्रूयते तथापि यथोक्ताघवृद्धियुक्ते द्वितीयसूतके इति बोद्धव्यं एवमेव विचार्य्यं स्यादित्यभिधानात्।

यद्यपि सूतकत्वेन समानत्वं तथाप्यस्पृश्यत्वादिनाऽसमानत्वात् पूर्व्वाशौचतुल्यत्वं न युक्तम्।

तेन पञ्चाहादूर्द्धं द्वितीयाशौचान्तादेव विशुद्धिरिति विचारार्थः। एवं मरणद्वयपौर्व्वापर्य्येऽपि पश्चाद्भाविनो महागुरुमरणस्याघवृद्ध्याधिक्यात् पञ्चाहोपरिसम्भवे सति तेनैव शुद्धिर्युक्तेति विचारातिदेशार्थः।

अतएव यत्र स्वरूपत एव गुरुलघुभावो यथा जननान्मरणस्य स्वभावत एव गुरुत्वं तयोःसन्निपाते सर्व्ववर्णेष्वेव मरणाशौचकालेनैव शुद्धिरित्याह मृतकस्यान्तरे यत्रेत्यादिना।

यच्च कूर्म्मपुराणवचनम्,—

अघवृद्धिमदाशौचं ऊर्द्ध्वञ्चेत्तेन शुध्यति।
[1]अथ चेत् पञ्चमीं रात्रिमतीत्य परतो भवेत्॥

---

(१) क—तथा।

अघवृद्धिमदाशौचं तदा पूर्व्वेण शुध्यति।

एकस्मात् सूतकादूर्द्धं यद्यघवृद्धिमदाशौचं स्यात् तथा एक-स्मान्मरणादूर्द्धं यद्यघवृद्धिमन्मरणान्तरं भवति तदा द्वितीयेन शुद्धिः—तदेव विशेषयति अथ चेदिति। तदा पूर्व्वेणेति अकारो-ऽत्र प्रश्लिष्टः। अपूर्व्वेण पूर्व्वस्मादन्येन द्वितीयेनेत्यर्थः।

अथवा परतोऽशौचकालादवधेः प्रातिलोम्येन पञ्चमीं रात्रि-मतिक्रम्य यदि भवति प्रथमस्याशौचदिनपञ्चकस्य मध्य इति यावत् तथा पूर्व्वेण प्रथमेन शुद्धिरिति। अन्यथा अतीत्येत्यनेनैव लब्धत्वात् परत इत्यनर्थकं स्यात्।

एतदपि देवलवचनसमानविषयम्।

यत्तु देवलवचनं—

अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा। इति।

तल्लघुहारीतसमानविषयम्।

यदा तु दशरात्रजननाशौचमध्येऽनुपनीतसपिण्डमरणादि त्रिरात्राशौचं भवति तदा जननस्य बहुकालव्यापितया गरीयस्त्वान्न मरणाशौचेन शुद्धिरितीयन्दिगिति।

---

## अथ गर्भस्रावाशौचम्।

मनुः,—

रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति।

अथ रात्रिभिरिति बहुवचनात् तृतीयमासात् प्रभृति गर्भस्रावे यावन्त्यो मासतुल्या रात्रयः तत्पर्य्यन्तमशौचं अस्यैव मनुवचनस्योत्तरार्द्धस्थित-स्त्रीपदानुषङ्गात्[१]।

तद्यथा,—

रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला।

इति स्त्रीपदं पूर्व्वार्द्धेऽपि विशेषापेक्षया[२] अनुषज्यते।

तेनैतद्गर्भस्रावाशौचं स्त्रीणामेव न पित्रादीनामशौचं एकश्लोके रजस्वलया सहोपादानं गर्भस्रावाशौचस्य वर्णचतुष्टयस्त्रीणां रजस्वलाशौचवत् समर्मिति ज्ञापयितुम्।

एतच्चादिपुराणे व्यक्तमत्र भविष्यति।

गर्भस्रावाशौचं स्त्रीणामेवेति व्यक्तमाह [३]जावालः—

रात्रयो मासतुल्याः स्युर्जनन्या गर्भसंस्रवे।

सुमन्तुः—

गर्भमासतुल्या दिवसा गर्भसंस्रावे सद्यःशौचं वा भवति।

अत्रापि गर्भमाससमानानां दिवसानां बहुत्वश्रुतेस्तृतीय-

---

(१) ख पुस्तके उत्तरार्द्धन्तु तत् स्त्रीपदानुसन्धानात्।

(२) क ग -पेक्षायां।

(३) ख देवलः—

मासात् प्रभृति गर्भस्रावविषयत्वमेव, सद्यःशौचं वेति तु पित्रा-दीनां षण्मासपर्य्यन्तं व्यवस्थितं बोद्धव्यम्।

यमः—

गर्भमासा अहोरात्रं त्र्यहं वा गर्भसंस्रवे।

गर्भमासा गर्भमाससमदिवसास्तृतीयमासात् प्रभृति अहो-रात्रं प्रथममासीयगर्भस्रावे त्र्यहं वेति द्वितीयमासीयगर्भस्रावे।

द्वितीयमासीयगर्भस्राव एव हारीतः—

गर्भपतने त्रिरात्रं स्त्रीणां साधीयो रजोविशेषत्वात्।

[1][ जातमृते मृतजाते वा कुलस्य।

साधीयः साधुतरमुक्तमित्यर्थः। यतो द्वितीयमासीयगर्भो रज एव किञ्चिद्विलक्षणमकठिनत्वात्। अतो रजस्तुल्यमशौचं स्त्रीणामुक्तमेव। ]

जातमृते मृतजाते वा कुलस्य इत्यत्र सन्निधानात् गर्भपतन इत्यनुषज्यते जीवनमरणयोश्च सम्भवात् सप्तमाष्टममासीयगर्भपतन-विषयम्।

तेन सप्तमाष्टममासीयगर्भे जातमृते मृतजाते वा कुलस्य पित्रादेस्त्रिरात्रमशौचम्। एतच्च सर्व्वाशिनां सर्व्वविक्रयिणाञ्च यथेष्टाचरणशीलानाञ्चेति वक्ष्यामः।

जातमृत इति विशेषोपादानात् यदि सप्तमाष्टममासीयो गर्भः पतितो दैववशाज्जीवति तदा सम्पूर्णमेवाशौचं पित्रादीनाम्।

---

(१) ग पुस्तके [ ] चिह्नितांशः पतितः।

मरीचिः,—

गर्भस्रुत्यां[1] यथामासमचिरे तूत्तमे त्रयः।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव च॥
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्त्तिता।

यथामासमिति माससंख्यानतिक्रमेण यावन्मासीयो गर्भस्ताव-न्माससंख्यानि दिवसानीत्यर्थः।

एवञ्चाभिधायाचिरे तूत्तमे त्रय इत्युच्यमाने मासत्रयादर्व्वा-गिति प्रतीयते। तेनाचिरे तु द्वितीये मासे गर्भस्रावे सत्युत्तमे उत्तमजातीयायां ब्राह्मण्यां त्रयो दिवसा अशौचकालाः क्षत्रि-यादेरादिपुराणवचने षण्मासपर्य्यन्तमशौचतुल्यत्वदर्शनात्।

अत्र मरीचिवचने चतुरहादिविधौ यावदधिकं तावद्दैव पैत्र कर्म्मानधिकारार्थं स्पृश्यत्वं दृष्टार्थकर्म्माधिकारश्च ब्राह्मणीतुल्य एव "सूतिकां पुत्रवतीं विंशतिरात्रेण सर्व्वकर्म्माणि कारयेत्" इति वत्।

यथा रजस्वलायां शङ्खः,—

शुद्धा भर्त्तुश्चतुर्थेऽह्नि अशुद्धा दैव-पैत्रयोः।
दैवे कर्म्मणि पैत्रे च पञ्चमेऽहनि शुध्यति॥ इति

ब्राह्मण्या अपि द्वितीयमासीयगर्भस्रावे दिनद्वये च सर्व्वाशौचं तृतीयदिवसे दैव-पैत्रकर्म्मानधिकार एव मरीचिनैव गर्भस्रुत्यां यथामासमित्युक्तत्वाद्व्याख्यातम्। हारीतवचनेऽप्येषैव व्यवस्था।

---

(१) ख-स्रुत्यां।

एवञ्च तृतीय-चतुर्थ-पञ्चम-षष्ठमासेष्वपि ब्राह्मणी-क्षत्रिया-वैश्या-शूद्राणां यथाक्रमं गर्भमाससमदिनातिरिक्तमेकरात्रं द्विरात्रं त्रिरात्रं षड्रात्रं दैव-पैत्रयकर्म्मानधिकारो बोद्धव्यः।

आदिपुराणे,—

षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते॥
अत ऊर्द्धं स्वजात्युक्तमशौचं तासु विद्यते।
सद्यःशौचं सपिण्डानां गर्भस्य पतने सति॥

तासामिति बहुवचनं क्षत्रिया वैश्या-शूद्राणामुपसंग्रहार्थं अत ऊर्द्धं स्वजात्युक्तमिति सर्व्ववर्णसम्बन्ध्यशौचोपदर्शनार्थम्। तासामिति प्रकृते पुनस्तास्विति ग्रहणं स्त्रीणामेव सम्पूर्णाशौच-नियमार्थम्।

यद्यपि—

नवमे दशमे मासि प्रवलैः सूतिमारुतैः।
निःसार्य्यते वाण इव जन्तुश्छिद्रेण सज्वरः[1]॥

इति याज्ञवल्क्यवचनान्नवम दशममासयोरेव मुख्यप्रसवकालत्वं तत्रैव सर्व्ववर्णसम्बन्धि सम्पूर्णमशौचमुक्तम्।

[2]तथाप्यप्रसवकालत्वेऽपि सप्तमाष्टममासयोर्वचनबलात् स्त्रीणां सम्पूर्णमशौचं सद्यःशौचं सपिण्डानामिति स्वकर्म्मानुष्ठान-

(१) क पुस्तके तन्तुस्तत्वेण सर्व्वथा।
(२) ख ग आप्रसवकालाद्वाऽपि।

विद्याशालिनां सपिण्डानां विद्याकर्म्मरहितानां त्वेकरात्रं विद्याकर्म्मानुष्ठानरहितानां सर्व्वाग्नित्वे सर्व्वविक्रयित्वे सति जातमृते मृतजाते वा कुलस्य त्रिरात्रमिति हारीतोक्तं त्रिरात्रम्।

एतच्च सर्व्वं स्पष्टमाह कूर्म्मपुराणे,—

अर्व्वाक् षण्मासतः स्त्रीणां यदि स्याद्गर्भसंस्रवः।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते॥
अत ऊर्द्ध्वन्तु पतने स्त्रीणां स्याद्दशरात्रकम्।
सद्यःशौचं सपिण्डानां गर्भस्रावाच्च वा ततः॥
गर्भच्युतावहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे।
यथेष्टाचरणे ज्ञातौ त्रिरात्रमिति निश्चयः॥

दशरात्रकमिति ब्राह्मणीसम्बन्ध्यशौचप्रदर्शनार्थं क्षत्रियादीनान्तु द्वादशरात्रं पञ्चदशरात्रं त्रिंशद्रात्रं क्रमेण बोद्धव्यम्।

यतो यत्रोत्तमजाते र्ब्राह्मण्याः सम्पूर्णाशौचं तत्र क्षत्रियादिस्त्रीणां सुतरां युक्तम्। अत्र स्त्रीणामिति प्रकृते पुनः स्त्रीणामिति ग्रहणं स्त्रीणामेव सम्पूर्णाशौचं नियमयति।

गर्भस्रावाच्च वा तत इति तच्छब्देन सन्निधानात् अत ऊर्द्धमित्यनेनोक्तः षण्मासोर्द्धकालः परामृष्यते। गर्भच्युतावित्यत्रापि षण्मासोर्द्धकाल एव सगुणत्व-निर्गुणत्वेन लघुगुर्व्वशौचव्यवस्थाया एकविषयत्वात्।

तेन सप्तमाष्टममासीयगर्भविषयत्वं सपिण्डसम्बन्धिनां सद्यःशौचैकरात्रत्रिरात्राणाम्।

पतितस्य गर्भस्य प्रतिपत्तिमाहादिपुराणे,—

स्त्रीणान्तु पतितो गर्भः सद्यो जातो मृतोऽथवा।
अजातदन्तो मासैर्वा मृतः षड्भिर्गतैर्बहिः॥
वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तन्तु काष्ठवत्।
खनित्वा शनकैर्भूमौ सद्यःशौचं विधीयते॥

[1]अजातदन्तो वेति तुल्यप्रतिपत्तित्वेन प्रसङ्गात् गर्भस्राव-प्रस्तावविहितं बहिर्निक्षिपेदिति सम्बन्धः।

अजातदन्तः षड्भिर्मासैर्गतैर्यदा मृतो भवति तदैवं कर्त्तव्य-मित्यभिधानात् षण्मासोपरि [2]जातदन्तमरणेऽप्यशौचातिरेक-प्रतिपत्तिः[3]।

एतेनादन्तजन्मनः सद्य इति याज्ञवल्क्यवचने षण्मासकालोप-लक्षणत्वं व्याख्याने[4] व्यक्तीकृतमिति।

---

(१) ग पुस्तके अजातेत्यादि सम्बन्ध इत्यन्तोऽंशः पतितः।
(२) ख पुस्तके अजात-।
(३) ख प्रतिपत्तेरनन्यत्वमिति दर्शयति।
(४) ख व्याख्यातं तत्।

# अथ सपिण्डाद्यशौचम्।

बृहस्पतिः,—

दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः॥

प्रेतसूतके-इति प्रेतञ्च सूतकञ्च प्रेतसूतकं समाहारद्वन्द्वः, तस्मिन् मरणे जनने चेत्यर्थः। सकुल्याः समानोदकाः। अत्र च त्रिरात्रं दशाहाशौचिनां गोत्रजा निवृत्तसमानोदकभावाः।

आश्वलायनः,—

दानाध्ययने वर्ज्जयेरन् दशाहं सपिण्डेषु गुरौ वासपिण्डे त्रिरात्रमितरेष्वाचार्य्येषु ज्ञातौ चासपिण्डे प्रत्तासु स्त्रीषु दन्तजाते चैकाहं सब्रह्मचारिणि समानग्रामीये च श्रोत्रिये।

गुरौ वा सपिण्डे दशरात्रमिति सम्बन्धः। सपिण्डस्य गुरुत्वेऽप्यशौचाधिक्यं नास्तीत्यर्थः।

इतरेष्वसपिण्डेष्वाचार्य्येषु त्रिरात्रम्। ज्ञातौ चासपिण्डे समानोदके एकाहम्। इदञ्च त्रिरात्रं सपिण्डाशौचिनाम्। प्रत्तासु विवाहितासु एतच्च पितृगृहमरणे पितृ-मातृव्यतिरिक्त-सपिण्डानाम्।

अथवा ज्ञातौ चासपिण्डे प्रत्तासु च स्त्रीषु दन्तजाते इत्यस्य त्रिरात्रमितिपदानुषङ्गेणान्या व्याख्या ज्ञातौ चासपिण्डे समानोदके त्रिरात्रं दशाहसपिण्डाशौचिनां प्रत्तासु कृतहस्तोदकासु स्त्रीषु पाणिग्रहणात् पूर्व्वं पितृपक्षे भर्त्तृपक्षे च त्रिरात्रम्।

दन्तजाते च किञ्चिन्निर्गुणयो र्मातापित्रोरत्यन्तनिर्गुणानां सपिण्डानाञ्च त्रिरात्रं सब्रह्मचारी वेदभागविशेषाध्ययनाङ्ग व्रतचारिणोर्मध्येऽन्यतर स्तस्मिन्मृते अपरस्य सब्रह्मचारिण एकाह-मशौचम्। एकग्रामनिवासिभिन्नकुलजे श्रोत्रियेऽसन्निहितमृते[1] एकाहम्।

गौतमः,—

पक्षिणीमसपिण्डे योनिसम्बन्धे सहाध्यायिनि च।

असपिण्डे समानोदके मृते पक्षिणीमशौचं कुर्य्यात्।

दिनद्वयमध्यगता रात्रिः पक्षिणी द्वयोरह्नोःपक्षद्वयसदृशत्वात्। एतच्च चतुःपञ्चाह सपिण्डाशौचिनाम्। योनिसम्बन्धे मातृस्वस्रेय-पितृस्वस्रेय-भागिनेयादिषु। सहाध्यायिनीति येन सहैकस्माद्गुरोः सकाशादध्ययनं क्रियते।

त्र्यहमिति प्रकृते पुनर्गौतमः—

आचार्य्ये तत्पुत्रस्त्री[2]याज्यशिष्येषु चैवम्।

तत्पुत्र आचार्य्यपुत्रः स च यद्यध्यापयति तदा तन्मरणे त्रिरात्रम्।

अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति।

इति मनुवचनात्।

तच्छब्दः स्त्रियामपि सम्बध्यते। तेनाचार्य्यस्त्रियां त्रिरात्रं तच्च नैष्ठिकब्रह्मचारिण आचार्य्याभावे आचार्य्यपत्नीशुश्रुषकत्वात्[3]।

---

(१) ख—असम्बन्धिनि सन्निधिमृते।

(२) क पुस्तके -तत्पुत्र स्त्रियां स्वशिष्येषु।

(३) ख शुश्रूकस्य।

आचार्य्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत्॥

इति मनुवचनात्--

ज्योतिष्टोमादि यागं कुर्व्वतो यस्य सदा आर्त्विज्यं क्रियते स याज्यस्तन्मरणे त्रिरात्रमृत्विजः। शिष्य इति उपनयनपूर्व्वं यः साङ्गवेदमध्याप्यते तन्मरणे आचार्य्यस्य त्रिरात्रम्।

मनुः,—

त्रिरात्रं प्राहुराशौचमाचार्य्ये संस्थिते सति।
तस्य पुत्रे च पत्न्याञ्च दिवारात्रमिति स्थितिः॥
श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्।
मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च॥
प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितिः।
अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ॥
सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम्।
जन्मन्येकोदकानान्तु त्रिरात्राच्छुद्धिरिष्यते॥

यस्याशौचं विधीयते तं प्रति अकृताध्यापने आचार्य्यपुत्रे मृतेऽहोरात्रमशौचम्। आचार्य्यपत्न्यामपि गोतमोक्तत्रिरात्रविषयाचार्य्यपत्नीव्यतिरिक्तायामहोरात्रम्। श्रोत्रिये भिन्नकुलजे गृहमृतेऽन्यत्र वा एकस्थाननिवासिनि उपसम्पन्ने सन्निहिते इत्यर्थः।

मातुले मातुः सहोदरे भ्रातरि भिन्नस्थानमृते पक्षिणीं व्याप्याशौचम्। शिष्यो योऽन्योपनीतो वेदैकदेशमध्याप्यते वेदाङ्गानि वा तस्मिन्मृते पक्षिण्येवाशौचम्।

ऋत्विगिति यः कदाचिद्याजयिता तस्मिन्मृते पक्षिणीं बान्धवा गौतमीययोनिसम्बन्धपदोपात्ताः ।

यस्य क्षत्रियस्य नृपते र्विषये निवासः क्रियते तस्मिन्नश्रोत्रिये वेदाध्ययनरहिते मृते सज्योतिरशौचं यदि दिवा मरणं तदा यावत्सूर्य्योऽस्ति तावदशौचं यदि रात्रौ तदा यावन्नक्षत्राणि सन्ति तावत्पर्य्यन्तमित्यर्थः ।

अनूचाने क्षत्रिये [1]स्वदेशनृपतौ मृतेऽहः कृत्स्नाहोरात्रमित्यर्थः। अनूचानपदेन सम्यगधीतवेदप्रवचनसमर्थोऽभिधीयते तथा गुरौ-मृतेऽहोरात्रं गुरुशब्देन उपाध्यायोऽल्पवेदाङ्गव्याख्याता उच्यते। सब्रह्मचारी व्याख्यात एव एकोदकाः समानोदका वक्ष्यमाणाः ।

शुध्येदित्यनुवृत्तौ विष्णुः,—

आचार्य्ये मातामहे च व्यतीते त्रिरात्रेण ।
अनौरसेषु पुत्रेषु जातेषु मृतेषु च ।
परपूर्व्वासु भार्य्यासु प्रसूतासु मृतासु च ॥

आचार्य्यपत्नी पुत्रोपाध्याय मातुल श्वशुर-श्वश्रु-श्वशुर्य्य-सहाध्यायि-शिष्येश्वेकरात्रेण ।

औरसव्यतिरिक्तानां क्षेत्रजाद्येकादशपुत्राणां प्रसवमरणयो-स्त्रिरात्रं परपूर्व्वाणाञ्च त्रिविधानां पुनर्भ्वाञ्च चतुर्विधानाञ्च स्वैरिणीनां भार्य्याणां नारदोक्तानां प्रसव-मरणयोस्त्रिरात्रम् ।

आचार्य्यपुत्रपत्न्योरुपाध्यायस्य च अहोरात्रमशौचं व्याख्यात-

(१) ख पुस्तके स्वदेशपदं नास्ति ।

मेव। मातुः सपत्नभ्रातरि मृतेऽहोरात्रमशौचम्। श्वश्रुश्वशुरयोरपि भिन्नदेशमृतयोरहोरात्रमशौचम्। श्वशुर्य्यस्य श्यालकस्य मरणे अहोरात्रम्। सहाध्यायी वेदैकदेशसहाध्यायी शिष्यश्च तयोर्मरणेऽहोरात्रम्।

कूर्म्मपुराणे,—

मातामहानां मरणे त्रिरात्रं स्यादशौचकम्।
एकोदकानां मरणे सूतके चैतदेव हि॥
पक्षिणी योनिसम्बन्धे बान्धवे च तदेव हि[1]।
एकरात्रं समुद्दिष्टं गुरौ सब्रह्मचारिणाम्।
प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितिः॥

तथा,—

परपूर्व्वासु भार्य्यासु पुत्रेषु कृतकेषु च।
त्रिरात्रं स्यात्तथाचार्य्ये भार्य्यास्वन्यगतासु च[2]॥
आचार्य्यपत्न्यां पुत्रे च अहोरात्रमुदाहृतम्।
एकाहं स्यादुपाध्याये स्वग्रामे श्रोत्रियेऽपि च॥
त्रिरात्रमसपिण्डेषु स्वगृहे संस्थितेषु च।
एकाहञ्चाप्यशुद्धिः स्यादेकरात्रञ्च शिष्यके॥

---

(१) ख बान्धवेषु तथैव च।
(२) क सद्यस्तु।
(३) ख स्वभार्य्यास्वन्यगासु च।

त्रिरात्रं श्वश्रुमरणे श्वशुरे चैतदेव हि।
सद्यःशौचं समुद्दिष्टं सगोत्रे संस्थिते सति॥

योनिसम्बन्ध इति गोतमवचने व्याख्यातम्। बान्धवेष्विति गोतमवचन एवासपिण्डपदसमानविषयम्।

गुरौ चैकरात्रं सब्रह्मचारिणाञ्च मरणे एकरात्रमिति सम्बन्धः।

कृतकेषु पुत्रेषु क्षेत्रजादिषु विष्णुवचनोक्तेषु स्वभार्य्यासु अन्यगासु सजातीयोत्कृष्टजातीयपुरुषान्तरसङ्गतासु त्रिरात्रम्। अपकृष्टजातीयगमने महापातकित्वेनाशौचाभावात्।

असपिण्डेषु भिन्नकुलजेषु श्रोत्रियेषु [1][स्वगृहमरणे त्रिरात्रं] एकाहमेकरात्रमित्यहोरात्रमित्यर्थः। शिष्यश्च विष्णुवचने व्याख्यातः।

श्वश्रुश्वशुरयोश्च सन्निहितमरणे त्रिरात्रम्। सगोत्रजो गोत्रजपदेन बृहस्पतिवचनोक्तस्तत्रैव व्याख्यातः।

अनौरसेषु पुत्रेषु त्रिरात्रमित्यत्र [2]विशेषमाह—

आदिपुराणे—

औरसं वर्ज्जयित्वा तु सर्व्ववर्णेषु सर्व्वदा।
क्षेत्रजादिषु पुत्रेषु जातेष्वथ मृतेषु च॥
अशौचन्तु त्रिरात्रं स्यात् समानेष्विति निश्चयः।

अनेन समानजातीयेषु क्षेत्रजादिषु पुत्रेषु त्रिरात्रमिति विशेष उक्तः।

---

(१) क ग पुस्तके [ ] चिह्नितांशः पतितः।

(२) इत्यविशेष-।

तथा आदिपुराणे—

आदावन्यस्य दत्तायां कुत्रचित् पुत्रयोर्द्वयोः।
पितुर्यत्र त्रिरात्रं स्यात् एकरात्रं सपिण्डिनाम्॥
एका माता द्वयोर्यत्र पितरौ द्वौ च कुत्रचित्।
तयोः स्यात् सूतकादैक्यं मृतकाच्च परस्परम्॥

प्रथममन्येन विवाहिता तेनैव जनितपुत्रा पुत्रसहिता यदा अन्यमाश्रिता भवति अन्येनापि जनितपुत्रा भवति तदा द्वयोरपि पुत्रयोर्मरणे प्रसवे च द्वितीयपुत्रपितुस्त्रिरात्रम्।

एवम्विधे च विषये यत्र परस्त्रीपुत्रजनकस्य त्रिरात्रं तत्र तत्सपिण्डानामेकरात्रं भिन्नपितृकयोस्तद्द्वयोरेकमातृजातयोः पुत्रयोर्मरणे प्रसवे चान्योन्यं मातृजात्युक्तमशौचम्।

बौधायनः—

त्रिरात्रमहोरात्रमेकाहमिति कुर्व्वीत आचार्य्योपाध्याय-तत्-पुत्रेषु त्रिरात्रमृत्विजाञ्च शिष्य-सतीर्थसब्रह्मचारिषु त्रिरात्रमहोरात्र मेकरात्रमिति।

कुर्व्वीतेति यथासङ्ख्यं क्रमेण कुर्व्वीतेत्यर्थः। तेनाचार्य्ये त्रिरात्रमुपाध्यायेऽहोरात्रं उपाध्यायपुत्रे एकाहं—"दिनमात्र दिवामरणे रात्रिमरणे तुल्यन्यायतया रात्रिमात्रं" आचार्य्यपुत्रे चासमानापकृष्टजातीये दिनमात्रं रात्रिमात्रञ्च ऋत्विजाञ्च कुल-क्रमागतानां सर्व्वक्रियासु[1] सर्व्वदा याजकानां मरणे त्रिरात्रं शिष्ये त्रिरात्रं गोतमवचने व्याख्यातम्।

---

(१) ख सर्व्वक्रतुषु।

सतीर्थे एकस्मात् स्वीयगुरोरध्ययनं कुर्व्वाणेऽहोरात्रम्। व्रब्रह्मचारिणि भिन्नगुरुशिष्ये वेदभागाध्ययनाङ्गभूत[1]व्रतचारिणि दिनमात्रं रात्रिमात्रञ्च।

प्रचेताः,—

मातृस्वसृ-मातुलयोः श्वश्रु श्वशुरयो र्गुरौ।
ऋत्विजि चोपरते च त्रिरात्रमिति शिष्यके॥

श्वशुरपर्य्यन्तानां स्वगृहमरणे त्रिरात्रम्। गुरावाचार्य्ये कृत्स्नवेदव्याख्यातरि च।

सद्यःशौचमित्यनुवृत्तौ शङ्ख-लिखितौ,—

अन्यपूर्व्वासु भार्य्यासु कृतकेषु सुतेषु च।
[2]तेषाञ्चोपरते स्नानं नाध्यायो नोदकक्रिया॥

अपकृष्टजातीयास्वन्यपूर्व्वासु भार्य्यास्वपकृष्टजातीयेषु च कृतकपुत्रेषु च सद्यःशौचम्।

जावालः,—

समानोदकानां त्र्यहो गोत्रजानामहः स्मृतम्।
मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा॥

गोत्रजमरणे बृहस्पतिवचनेन स्नानाच्छुद्धिरुक्ता इदन्त्वेकाहो त्यन्तनिर्गुणानाम्।

---

(१) क ग पुस्तके ब्रह्मव्रत-।

(२) ख पुस्तके

नानध्यायो भवेत्तस्य नाशौचं नोदकक्रिया।

मातृबन्धुः प्रसिद्ध एव,—

मातुर्मातुःस्वसुः पुत्त्राः मातुः पितुःस्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥

गुरौ [1]चापि वेदार्थप्रवक्तरि उपाध्याये च। मित्रे स्नेहादुपकारातिशयाचरणशीले। मण्डलाधिपतिर्यस्य मण्डले स्थितिरूपेण निवासः क्रियते।

अङ्गिराः,—

गृहे यस्य मृतः कश्चिदसपिण्डः कथञ्चन।
तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः॥

असपिण्डः श्रोत्रियः।

एकरात्रेण शुध्येदित्यनुवृत्तौ—

विष्णुः,—

असपिण्डे स्ववेश्मनि मृते।

असपिण्डे श्रोत्रिये।

मनुः,—

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्॥
यद्यन्नमत्ति तेषान्तु दशाहेनैव[2] शुध्यति।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्॥

निर्हृत्य दहनं वहनञ्च कृत्वेत्यर्थः। बन्धुवदिति स्नेहाद्यनुबन्धात्। अनाथस्यादृष्टबुद्ध्या वहनादौ नैष कल्प इत्यर्थादुक्तम्।

(१) ख त्वल्प-। (२) ख दशरात्रेण।

मातुराप्तानिति सोदरभ्रातृ-भगिनी-मातुलप्रभृतीन्। अशौचि-
गृहे शयनाद्यकरणेऽशौच्यन्नभक्षणरहितानामेकाहोरात्रमशौचम्।
अशौचिगृहवासे तदन्नभक्षणरहितानां त्रिरात्रमवतिष्ठते।

मातृबन्धुष्वाप्तबन्धुषु वहनदहनकरणेऽशौचिगृहवासाभावेऽपि
त्रिरात्रं वहनाद्यभावेऽपि मातुलादौ पक्षिणी-त्रिरात्रयोर्विधानात्।

कूर्म्मपुराणे,—

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्।
अशित्वा च सहोषित्वा दशरात्रेण शुध्यति॥
यद्यन्नमत्ति तेषान्तु त्रिरात्रेण तथा शुचिः।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्॥
सोदरेष्वेतदेव स्यान्मातुराप्तेषु बन्धुषु॥

आपत्काले वहनादि कृत्वाऽशौच्यन्नभक्षणे त्रिरात्रम्। आप्ते-
ष्विति सोदरपदेन विवृतम्। एतदेवेत्यनेन दशरात्र-त्रिरात्रयो-
रतिदेशः[1]।

विष्णुः,—

ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नाति तस्य तावदशौचं
यावत्तेषाम्। अशौचव्यपगमे प्रायश्चित्तं कुर्य्यात्।

अनापदि कामतो भोजनं कृत्वेदम्।

कूर्म्मपुराणे,—

यस्तेषामन्नमश्नाति सकृदेव हि कामतः।
तदशौचे निवृत्तेऽसौ स्नानं कृत्वा विशुध्यति॥

---

(१) ख विकल्पः।

वृहस्पतिः,—

यस्तैः सहासपिण्डोऽपि प्रकुर्य्याच्छयनासनम्।
बान्धवो वा परो वाऽपि स दशाहेन शुध्यति॥

प्रकुर्य्यादिति प्रकर्षेण कुर्य्यात् कामतोऽनुवृत्तेः प्रमादतः करणे तु नैतदुक्तं भवति अत्र तु स्नानमेकरात्रञ्च। दशाहेनेति प्रदर्शनार्थं क्षत्रियादौ द्वादशाहादिना।

कूर्म्मपुराणे,—

यस्तैः सहासनं कुर्य्याच्छयनादीनि चैव हि।
बान्धवो वा परो वाऽपि स दशाहेन शुध्यति॥

आदिशब्दादालिङ्गनसंवाहनादिग्रहणम्। बान्धवः सपिण्डव्यतिरिक्तः।

अङ्गिराः—

प्रेतान्नमसपिण्डस्य यावदश्नात्यकामतः।
तावन्त्यहान्यशौचं स्यादपिण्डानां कथञ्चन॥

अपिण्डानामिति सपिण्डव्यतिरिक्तानां कथञ्चनेत्यश्नातीत्यनेन सम्बध्यते तेनापद्यकामत इदमिति।

कूर्म्मपुराणे—

यावत्तदन्नमश्नाति दुर्भिक्षोपहतो नरः।
तावन्त्यहान्यशौचं स्यात् प्रायश्चित्तं ततश्चरेत्॥

अङ्गिराः—

ब्रह्म-क्षत्र-विशां भुक्त्वा न दुष्यत्यग्निहोत्रिणाम्।
सूतके शाव आशौचे अस्थिसञ्चयनात्परम्॥

अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् ।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रन्तु पयः पिवेत् ॥
आदावारभ्य तु परः शावं भुञ्जीत नान्तरा ।
सपिण्डैः सह शुध्येत्तु अधःशायी सुसंयतः ॥

अग्निहोत्रिणां ब्रह्म-क्षत्र-विशामपि जननाशौचे [1][ आपद्य-कामतो ] भुक्त्वा दोषो नास्ति मरणाशौचे त्वस्थिसञ्चयनोत्तर-कालभोजने दोषाभावः ।

चतुर्थे चास्थिसञ्चयः ।

तेन चतुर्थदिनोत्तरकालमप्यग्निहोत्रिणामशौचमनु[2]वर्त्तत एव दशाहपर्य्यन्तमिति प्रतीयते ।

अतो वेदाग्निसंयोगादिना एकाह-त्र्यहादिभिः सर्व्वाशौच-निवृत्तिरिति व्यामोह एव ।

अन्नसत्रप्रवृत्तानां प्रत्यहं [3]यथासंख्यमन्नदानमवश्यं मया कर्त्तव्यमिति सङ्कल्पपूर्व्वकं प्रत्यहमन्नदायिनामशौचे आमान्नमात्र-ग्रहणे दोषाभावः । पक्वान्नभोजने त्रिरात्रम् । दुग्धपानमात्रं प्रायश्चित्तम् । अन्नाच्चिरात्रमेवाशौचम्[4] ।

परोऽसपिण्डोऽशौचोपक्रमात् प्रभृत्यन्तरा अशौचसमाप्ति-

---

(१) ख पुस्तके [ ] चिह्नितांशः पतितः ।
(२) क अन्ते वर्त्तत एव ।
(३) क यथाशक्त्या ।
(४) क—प्रायश्चित्तम् ।

कालमध्ये शावाशौचन्नं न भुञ्जीत यतः स सपिण्डैः सह तुल्याशौचो भवति, अधःशायी सुसंयतः सन् प्रायश्चित्तं कुर्य्यादित्यर्थः।

मनुः,—

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा।
स्नात्वा सचेलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥

प्रेतं ब्राह्मणजातीयं मृतं ज्ञात्वाऽनुगमनेऽग्निस्पर्श-घृतप्राशनविधाने तात्पर्य्यं न त्वशौचाभावे, अननुगमनेऽपि दशरात्रादिविधानात्। अज्ञात्यनुगमने तु अशौचाभावेऽपि अनुगमनस्य स्नानाग्निस्पर्श-घृतप्राशनमात्रनिमित्तत्वात्।

वसिष्ठः,—

मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमशौचं अस्निग्धे त्वहोरात्रं शवानुगमने चैवम्।

एवमिति त्रिरात्रैकरात्रयोरतिदेशः।

तत्र शूद्रशवानुगमने बुद्धिपूर्व्वके त्रिरात्रं क्षत्त्रियशवानुगमने एकरात्रं अर्थाद्वैश्यशवानुगमने द्व्यहम्।

यथा कूर्म्मपुराणे,—

प्रेतीभूतं द्विजं विप्रो योऽनुगच्छति कामतः।
स्नात्वा सचेलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥
एकाहात् क्षत्त्रिये शुद्धिर्वैश्ये तु स्याद्द्व्यहेन तु।
शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः॥

अर्थाद्वैश्ये पञ्चाशत् प्राणायामाः। क्षत्त्रिये पञ्चविंशतिः।

याज्ञवल्क्यः—

ब्राह्मणेनानुगन्तव्यो न तु शूद्रः कदाचन।
अनुगम्याम्भसि स्नात्वा अग्निस्पृक् घृतभुक् शुचिः॥

कथञ्चन इति कार्य्यान्तरार्थेऽपि[1] प्रसङ्गादपि शूद्रशवानुगमनं वर्ज्जनीयम्। यदि च प्रमादात्ताद्दशशवानुगमनं सम्पद्यते तदा स्नानं घृतप्राशनमग्निस्पर्शश्च कार्य्यः। अम्भसीत्युद्धृतजलेन[2] स्नाननिषेधार्थम्।

पराशरः,—

प्रेतीभूतन्तु यः शूद्रं ब्राह्मणो ज्ञानदुर्ब्बलः।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत्॥

बुद्धिपूर्व्वानुगमनविषयमिदं व्याख्यातमेव।

पैठीनसिः,—

असम्बन्धिनो द्विजान् वहित्वा दहित्वा च सद्यःशौचम्।
सम्बन्धे त्रिरात्रम्।

सम्बन्धे मातुलादौ[3] त्रिरात्रं मनूक्तविषयम्। असम्बन्धिनोऽनाथस्यादृष्टबुद्ध्या वहन-दहनयोः सद्यःशौचम्।

कूर्म्मपुराणे,—

अनाथञ्चैव निर्हृत्य ब्राह्मणं धनवर्ज्जितम्।
स्नात्वा सम्प्राश्य तु घृतं शुध्यन्ति ब्राह्मणादयः॥

---

(१) ग कार्य्यान्तरेणापि।
(२) ख उद्धृतजलनिषेधार्थं।
(३) ख मातुलादिविषये।

पराशरः,—

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः।
पदे पदे फलं तेषां यज्ञतुल्यं न संशयः॥
न तेषामशुभं किञ्चित् विप्राणां शुभकारिणाम्।
जलावगाहनात्तेषां सद्यःशौचं विधीयते[१]॥
[२]असगोत्रेण सम्बद्धं प्रेतीभूतं द्विजोत्तमम्।
वहित्वा च दहित्वा च सद्यःशौचं विधीयते॥

गौतमः,—

प्रेतोपस्पर्शने दशरात्रमशौचं अभिसन्धाने[३] चेदुक्तं वैश्यशूद्रयोः। आर्त्तवीर्वा पूर्व्वयोश्च त्र्यहं वा। [४]अवरश्चेद्वर्णः पूर्व्ववर्णमुपस्पृशेत्। पूर्व्वोऽथ वा अवरन्तत्र [५]शावोक्तमशौचम्।

उपस्पर्शनं वहनदहनादिरूपं धनग्रहणाभिसन्धानपूर्व्वं ब्राह्मणशवस्य यदि ब्राह्मणः करोति तदा दशरात्रमशौचं कुर्य्यात्।

क्षत्त्रियशवस्य क्षत्त्रियस्तथैवं कृत्वा क्षत्त्रियजात्युक्तमशौचं कुर्य्यात्। उक्तं वैश्य-शूद्रयोरिति वैश्य-शूद्रदर्शनात्।

---

(१) मूलपुस्तके शुद्धिः स्मृतिरितीरिता।
(२) ख पुस्तके असगोत्रेणेत्यादि वचनं नास्ति।
(३) ग -सन्धाय चैतद्युक्तं। ख सन्धाय।
(४) ख ग पुस्तकद्वये यदिपदमधिकम्।
(५) क ग पूर्व्वोक्तं।

अस्यार्थः,—

वैश्वस्य एवंविधेऽसपिण्डवैश्यशवस्पर्शे वैश्यमरणोक्तमशौचम्।
द्रस्याप्यसपिण्डशूद्रशवस्पर्शे तथाविधमेव सपिण्डमरणोक्त-
शौचम्। एवञ्च तुल्यन्यायतया क्षत्रियस्याप्युक्तम्।

आर्त्तवोर्व्वा ऋतुसंख्या रात्रीर्व्याप्या[1]शौचं षड्रात्रमिति यावत्
ड्रात्रमिति वक्तव्ये ऋतुग्रहणं सप्त-पञ्च-षट्-ऋतुसंख्या-रात्रि-
हणार्थम्। तेनात्यन्तनिर्गुणे सप्तरात्रमापदि आपद्येव निर्गुणो-
कृष्टयोः षड्रात्रपञ्चरात्रे।

पूर्व्वयोश्च ब्राह्मणक्षत्रिययोरप्यापदि ऋतुसंख्यारात्रिपर्य्यन्त-
शौचं, त्र्यहं वा सर्व्वेषाम्। एतच्चात्यन्तापदि।

एतच्च स्पष्टमुक्तं कूर्म्मपुराणे,—

दशाहेन शवस्पर्शे सपिण्डश्चैव शुध्यति।
यदि निर्दहति प्रेतं प्रलोभाक्रान्तमानसः॥
दशाहेन द्विजः शुध्येद्द्वादशाहेन भूमिपः।
अर्द्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति॥
षड्रात्रेणाथवा सर्व्वे त्रिरात्रेणाथवा पुनः।

यत्तु—अवरश्चेदित्यादि गोतमसूत्रम्।

तस्यायमर्थः,—

यद्यपकृष्टजातिरुत्कृष्टवर्णं शवमुत्कृष्टवर्णो वा अपकृष्टजातिं
वं स्नेहेन लोभाद्वा वहनादिना स्पृशेत् तदा प्रेतजात्युक्तकालं
र्व्वक्रियानिवृत्तिरूपमशौचं कुर्य्यात्।

(१) ग -पर्य्यन्तं।

कूर्म्मपुराणे—

अवरश्चेद्वरं वर्णमवरं वा वरो यदि।
अशौचे संस्पृशेत् स्नेहात्तदाशुच्येन[1] शुध्यति॥

आदिपुराणे,—

योऽसवर्णन्तु मूल्येन नीत्वा चैव दहेन्नरः।
अशौचन्तु भवेत्तस्य प्रेतजातिसमन्तदा॥
सर्व्वे वर्णाः सजातीयं दग्ध्वा त्र्यहमशौचिनः।
भवन्ति परजातीयं निर्दह्य परजातिवत्॥
[2]स्वजातिमसपिण्डञ्च दग्ध्वा तद्गृहभोजिनः।
स्वजात्युक्तमशौचन्तु चरन्ति जड़बुद्धयः॥
अन्यजातिं मृतं दग्ध्वा तदन्नं भुञ्जते तु ये।
ते कुत्सिता नराः प्रोक्तास्तस्याशौचस्य भागिनः॥
दाहयित्वा तु मूल्येन गुरुं प्रेतं भवेत्ततः।
अशौचं दशरात्रन्तु शिष्यस्येति विनिश्चयः॥
आचार्य्यं वाऽप्युपाध्यायं गुरुं वा पितरञ्च वा।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम्॥
कृत्वा पतति नो तस्मात् प्रेतान्नं तत्र भक्षयेत्।
अन्यत्र भोजनं कुर्य्यात् न च तैः सह संवसेत्॥
एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति।

(१) मूलपुस्तके तदाशौचेन।
(२) ग सजातीयमपिण्डञ्च।

तथा,—

ब्राह्मणो न दहेच्छूद्रं मित्रं वाऽप्यन्यमेव वा।
मोहाद्दग्ध्वा ततः स्नातः स्पृष्ट्वाग्निं प्राशयेद्घृतम्।
उपवासरतः पश्चात् त्रिरात्रेण विशुध्यति॥
सर्व्वेषां स्यादहोरात्रं शवानुगमनादपि।
शवस्पर्शविधानोक्तं विहितं सार्व्ववर्णिकम्॥
मृतस्य यावदस्थीनि ब्राह्मणस्य [1]हृतान्यपि।
तावद्यो ब्राह्मणः कश्चित् रौति तद्बान्धवैः सह॥
तस्य स्नानात् भवेच्छुद्धिः ततस्त्वाचमनं [2]चरेत्।
[3]अनस्थिसञ्चयाद्विप्रो रौति चेत् क्षत्र-वैश्ययोः॥
तदा स्नातः सचेलन्तु द्वितीयेऽहनि शुध्यति।
अनस्थिसञ्चिते शूद्रे ब्राह्मणो रौति चेज्जड़ः॥
ततः सचेलस्नातस्तु शुध्यते दिवसैस्त्रिभिः।
अस्थिसञ्चयनादूर्द्ध्वमहोरात्राच्छुचिर्भवेत्॥
सचेलस्नानमन्येषामकृतेऽप्यस्थिसञ्चये।
कृते तु केवलं स्नानं क्षत्र-विट्-शूद्रजन्मनाम्॥

सजातीयमसपिण्डं दग्ध्वाऽशौचिगृहवासे सति तदन्नभक्षणे त्र्यहमशौचम्। परजातीयं स्नेहाद्दग्ध्वा प्रेतजातिमरणाशौचम्। असपिण्डसजातिदाहे चाशुच्यन्नभक्षणे सजातिसपिण्डमरणाशौचम्।

---

(१) ख अर्पितानि। घ आहृतानि। (३) घ अस्थिसञ्चयनात्।
(२) ख भवेत्।

अन्यजातीयदाहं कृत्वा तत्पुत्रपत्नाद्यन्नभक्षणे प्रेतजात्य-शौचं तावद्भवत्येव। अधिकन्तु[1] निन्दितत्वात् प्रायश्चित्ताचरणं तच्च प्रायश्चित्तप्रकरणे विष्णुादिभिरुक्तम्।

मूल्यग्रहणपूर्व्वकं शिष्यो यदि गुरुं दहति तदा दशाहाशौचं मूल्यग्रहणपूर्व्वकदाहे यदशौचं तद् गुरु-शिष्यभावेऽपि[2] न ह्रसतीति तात्पर्य्यम्।

व्रतस्थो ब्रह्मचारी यदा कर्त्तन्तराभावे मातृ-पितृ-वेदार्थ-व्याख्यातृ-गुरूपाध्यायाचार्य्यान् स्वयं दहति तदा यदि मात्रादि-गृहे भुङ्क्ते तदा पतति व्रतानधिकारी भवति तस्मात्तदन्नं न भक्षयेदित्यर्थः किन्त्वन्यतो भोजनं कार्य्यमेवमेकाहमशौचम्।

मैत्र्यादपि शूद्रदाहकरणे ब्राह्मणस्य सचेलस्नानाग्निस्पर्श-घृतप्राशनाद्युपवासत्रयं त्रिरात्रञ्चाशौचम्।

देशविशेषे क्वचित् सर्व्ववर्णशवानुगमने सर्व्ववर्णानामेवा-होरात्रमशौचम्। शवस्पर्शविधानोक्तमिति उक्तस्यैवोपसंहारो[3] रोदननिमित्ताशौचाभिधानार्थः।

मृतस्य ब्राह्मणस्यास्थीनि यावता कालेनाहृतानि भवन्ति तावत्कालमध्येऽप्यसपिण्डो ब्राह्मणो बान्धवस्तद्बान्धवैः सपिण्डैः सह रोदनं कृत्वा स्नानाच्छुध्यति। ततस्त्वस्थिसञ्चयनात् परं रोदने आचमनाच्छुद्धिः।

---

(१) क किन्तु।

(२) क गुरुशिष्ययोरपि।

(३) -संहारत्वे ... -अभिधानार्थम्।

क्षत्रिय-वैश्ययोरस्थिसञ्चयनात् पूर्व्वं रोदने ब्राह्मणः[१] सचेल-स्नातो द्व्यहेन शुध्यति। अस्थिसञ्चयनात् परं रोदने सज्योतिरशौचम्।

शूद्रे एकाहदर्शनात् सचेलस्नानमन्येषामिति–ब्राह्मणादन्येषां क्षत्रिय-वैश्य-शूद्राणां वर्णचतुष्टयस्यापि मरणेऽस्थिसञ्चयनात् पूर्व्वं रोदने सचेलस्नानम्। [२]परतः स्नानमात्रम्।

कूर्म्मपुराणे,—

अनस्थिसञ्चिते शूद्रे रौति चेद्ब्राह्मणः स्वकैः।
त्रिरात्रं स्यात्तथाऽशौचमेकाहमन्यथा स्मृतम्॥
अस्थिसञ्चयनादर्व्वागेकाहं क्षत्र-वैश्ययोः।
अन्यथा चैव सज्योति ब्राह्मणे स्नानमेव तु॥
अनस्थिसञ्चिते विप्रे ब्राह्मणो रौति चेत्तथा।
स्नानेनैव भवेच्छुद्धिः सचेलेन न संशयः॥

स्वकैरिति मृतस्य शूद्रस्य सपिण्डैः सहेत्यर्थः। अन्यथेति अस्थिसञ्चयनात् परमित्यर्थः। क्षत्रिय-वैश्ययोरत्युत्कृष्टगुणयोरस्थि-सञ्चयनात् पूर्व्वं रोदने[३] एकाहः। ब्राह्मणे अबान्धवेऽस्थिसञ्चय-नात् परं स्नानमात्रं पूर्व्वं सचेलस्नानम्।

---

(२) ख तद्बान्धवैः सहेत्यधिकः पाठः।

(३) ख परत इत्यादिकं नास्ति।

(४) ग पुस्तके ब्राह्मणे इत्यधिकम्।

[1]पराशरः,—

अस्थिसञ्चयनादर्व्वाक् यदि विप्रोऽश्रु पातयेत्।
मृते शूद्रे गृहं गत्वा त्रिरात्रेणैव शुध्यति॥
अस्थिसञ्चयनादूर्द्धं मासं यावद्द्विजातयः।
दिनत्रयेण शुध्यन्ति वाससां क्षालणेन च॥
स्वजाते दिवसेनैव द्व्यहात् क्षत्रिय-वैश्ययोः।
स्पर्शं विनानुगमने शूद्रो नक्तेन शुध्यति[2]॥
मृतस्य बान्धवैः सार्द्धं कृत्वा तु परिदेवनम्।
वर्ज्जयेत्तदहोरात्रं दानं स्वाध्यायकर्म्म च॥

गृहङ्गत्वेत्यनेनैतद्दर्शितं यन्मृतस्य शूद्रस्य पुत्त-भ्रात्रादिभिः[3] सहास्थिसञ्चयनात् पूर्व्वं रोदनं कृत्वा त्रिरात्रमशौचम् तन्मृतस्य गृहं गत्वा रोदने न तु स्थानान्तरे दैववशान्मेलने तत्राहोरात्रमिति तात्पर्य्यार्थः।

वाससामिति बहुवचनेनैतद्दर्शयति-यावन्ति वासांसि देहे वर्त्तन्ते तावन्ति च प्रक्षालयितव्यानि।

एवं यत्र यत्र सचेलस्नानं विहितं तत्र तत्र चैवं यदि प्रच्छद-पटादिकमस्ति तदा तदपि प्रक्षालणीयम्, न तु तत्सहितेनैव[4] स्नातव्यं न वा एककोटिकेनापि चेलं गृहीत्वा स्नातव्यम्।

---

(१) श पारस्करः।

(२) ख पुस्तके शूद्रोक्तेन विशुध्यति।

(३) घ पुस्तके भार्य्यादिभिः।

(४) क सच्छिहितेन।

प्रकृतो विप्रः स्वजातेर्ब्राह्मणजातीयस्यात्यन्तहीनगुणस्य मृतस्य पुत्रादिभिः सहास्थिसञ्चयनात् पूर्व्वं रोदने एकाहमशौचं कुर्य्यात्-क्षत्रिय-वैश्ययोरपि गृहं गत्वा त्वस्थिसञ्चयनात् प्रागेव रोदने द्व्यहाशौचं द्विजात्यनुगमनमात्रं कृत्वा नक्तेन सूर्य्यास्त-कालेन शूद्रः शुध्यति।

अर्थाद्रात्र्यनुगमने सूर्य्योदयकालेन मृतस्य शूद्रस्य परिदेवनं रोदनरहितं विलापमात्रं कृत्वा एकाहोरात्रमशौचम्।

विष्णुः,—

सर्व्वस्यैव प्रेतस्य बान्धवैः सहाश्रुपातं कृत्वा स्नानेनाकृतेऽस्थि-सञ्चये सचेलस्नानेन।

शुद्ध्यतीति वाक्यशेषः। एतच्च मृतस्य शूद्रस्य गृहमगत्वा स्थानान्तरे प्रसङ्गाद्दर्शने सति बोद्धव्यं ब्राह्मणस्य त्वसम्बन्धिनो गृहगमने न[1]।

---

(१) ध न कश्चिद्विशेषः।

## अथ सपिण्डादिलक्षणम्।

मनुः,—

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने॥

यं प्रतियोगिनं कृत्वा निरूप्यते तस्य पितृप्रभृतयः षट् पुरुषाः सपिण्डाः सप्तमोऽसपिण्डः, यतः पितृ-पितामह-प्रपितामहेभ्यस्त्रिभ्यः पिण्डदानं प्रपितामहस्य च पितृपितामह-प्रपितामहास्त्रयः पुरुषाः पिण्डलेपभागिनः सप्तमस्य तु पिण्ड-सम्बन्धो नास्तीत्यसपिण्डः। यस्य चैते षट्पुरुषाः सपिण्डाः सोऽप्यर्थात्तेषां सपिण्डो दातृत्वेन तत्पिण्डसम्बन्धात्।

इत्यतः साप्तपौरुषी सपिण्डतेत्याहतुः शङ्ख-लिखितौ—

सपिण्डता तु पुरुषे[१] गोत्रतः साप्तपौरुषी।
पिण्डञ्चोदकदानञ्च शौचञ्चैव तदानुगम्॥

गोत्रतो गोत्रैक्ये साप्तपौरुषी सपिण्डता।

भिन्नगोत्रत्वे तु पिण्डसम्बन्धेऽपि न साप्तपौरुषी किन्त्वल्प-पुरुषव्यापिनी इयञ्च मातृकुलेऽनन्तरं वक्ष्यते।

तदानुगमिति,—

तान् सप्तपुरुषान् आ समन्तात्कारेण पिण्डञ्चोदकदानञ्च शौचञ्च अनुगच्छतीति तदानुगम्। तत्र पिण्डाशौचानुगमन-प्रकार उक्त एव, उदकानुगमोऽपि सप्तमपुरुषमध्ये यस्य कस्य-

(१) ख सर्व्वेषाम्।

चिन्मरणे दशाहमध्ये प्रथम-तृतीय-सप्तम-नवमदिनेषूदकतर्पण-विधानात्।

लेपभागिभ्यः परं यावदमुकनाम्नोऽस्माकं पूर्व्वपुरुषादयं जात इति विशेषतः, अयमस्मत्कुले जात इति सामान्यतो वा स्मर्य्यते तावत् समानोदकत्वम्।

गोतमः,—

पिण्डनिवृत्तिः सप्तमे पञ्चमे वा।

अत्रासहायव्याख्या,—

यदा पितृ-पितामह-प्रपितामहास्त्रयो जीवन्ति तदा प्रपितामहादूर्द्ध्वं त्रिभ्यः पिण्डदानम्। एवञ्च पित्रादित्रयेण सह षट्-पुरुषाः सपिण्डा भवन्ति सप्तमे निवृत्तिः।

यदा तु पितृ-पितामह-प्रपितामहास्त्रयो मृताः तदा पित्रादि-त्रिभ्य एव पिण्डदानात् पिण्डदात्रा सह चत्वारः पुरुषाः सपिण्डाः पञ्चमो वृद्धप्रपितामहोऽप्यसपिण्डः—आहत्य पिण्ड-सम्बन्धाभावात्।

इदन्तु व्याख्यानं न शोभनं प्रतिभाति मत्स्यपुराणादि-पुराण-कूर्म्मपुराणवचनैः पिण्डलेपभागित्वेनापि सापिण्ड्याभि-धानादिति।

अतोऽन्यथा व्याख्यायते—तत्र सप्तमे निवृत्तिरिति मनु-वचनविषयं पञ्चमे निवृत्तिस्तु अविवाहितानां कन्यानां पितृ-समानजातीयानाम्।

यथा वसिष्ठः,—

सपिण्डता सप्तमे पुरुषे विज्ञायते अप्रत्तानां स्त्रीणां त्रिपौरुषम्।

अप्रत्तानां विवाहरहितानां त्रिपौरुषं पितृ-पितामह-प्रपितामहपर्य्यन्तम्। एवञ्च कन्यापेक्षया पञ्चमे वृद्धप्रपितामहे सपिण्डता नास्ति अतश्च कन्यायाः प्रपितामहभ्रातृ-सन्तानापेक्षया सहपिण्डत्वाभावात् कन्यामरणे सपिण्डोक्तमशौचं नास्ति।

आदिपुराणे,—

सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषी।

लेपभागित्वेऽपि सापिण्ड्यमाह मत्स्यपुराणे,—

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥

[१]कूर्म्मपुराणे,—

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने॥
पिता पितामहश्चैव तथैव प्रपितामहः।
लेपभाजश्चतुर्थाद्याः सापिण्ड्यं साप्तपौरुषम्॥

सुमन्तुः,—

(१) ख पुस्तके कूर्म्मपुराणीयवचनद्वयं पतितम्।

तथा ब्राह्मणानामेकपिण्डस्वधानामादशमाज्जन्मविच्छित्तिर्भवति, आसप्तमादृक्थविच्छित्तिर्भवति, आतृतीयात् स्वधाविच्छित्तिर्भवति। [1]अन्यथा पिण्डाशौचक्रियाविच्छेदात् ब्रह्महतुल्यो भवति।

स्वधा श्राद्धं सम्प्रदानदातृत्वाभ्यामेकस्मिन् पिण्डे श्राद्धे च सम्बन्धो येषां ब्राह्मणानान्ते एकपिण्डस्वधाः।

एतदुक्तं भवति यस्य पित्रादयस्त्रयः पुरुषा जीवन्ति तेन श्राद्धे कर्त्तव्ये वृद्धप्रपितामहं गृहीत्वा त्रयाणां कर्त्तव्यं तेनैते त्रयः श्राद्धकर्त्तुरेकपिण्डस्वधा[2] भवन्ति। [3][ एवम्भूतस्य पुरुषस्य दशमपुरुषपर्य्यन्तं सपिण्डाशौचधर्म्मोऽनुवर्त्तते ]।

अपुत्रधनग्रहणाधिकारस्तु सन्निहिततराभावे सप्तमपुरुषपर्य्यन्तम्। मृतपितृकस्य स्वधोपलक्षितश्राद्धाधिकारः पुरुषत्रयपर्य्यन्तम्। अन्यथा तु पिण्डादानेऽशौचानङ्गीकारे ऋक्थाग्रहणे च ब्राह्मणवधदोषभागित्वम्। अतः प्रत्यवायगुरुत्वादत्यन्तादरः[4] कर्त्तव्य इत्यर्थः।

शङ्खः,—

यद्येकजाता बहवः पृथक्क्षेत्राः पृथक्धनाः।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु॥

---

(१) क ख पुस्तकद्वये अन्यथेत्यादि भवत्यन्तोऽंशः पतितः।
(२) घ—लेपभुजः।
(३) ख पुस्तके [ ] चिह्नितांशः पतितः।
(४) ख -गुरुत्वादरः।

पृथक्चेता असवर्णापकृष्टजातीयस्त्रीषु जाताः—यदा कृत-विभागा भवन्ति तदा सपिण्डा भवन्त्येव किन्त्वशौचं मातृ-जातिसम्बन्धि, एषान्तु सपिण्डता पुरुषत्रयपर्य्यन्तम्।

साप्तपौरुषी सपिण्डता चतुर्णामपि वर्णानामित्याह—

आदिपुराणे,—

सर्व्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी।
[१]सपिण्डता ततः पश्चात् समानोदकधर्म्मता॥
ततः कालवशाद्यत्र विस्मृतैर्जन्मनामभिः।
समानोदकसंज्ञा तु तावन्मात्रापि नश्यति[२]॥
आत्मा पिता तत्पिता च आत्मनः प्रपितामहः।
तस्यापि यः पिता कश्चित् तथैव च पितामहः॥
प्रपितामहसंज्ञस्य यः कश्चित्प्रपितामहः।
ऊर्द्ध्वं गणनया चाद्यः सर्व्वेषां प्रपितामहः॥
पितामहो द्वितीयस्तु तृतीयस्तु पिता भवेत्।
सोदर्य्येण समं भ्रात्रा स्यादात्मापि चतुर्थकः॥
सवर्णायास्तथा पुत्रः पञ्चमः परिकीर्त्तितः।

---

(१) क ग पुस्तकद्वये आदिपुराणवचनेषु द्वितीयपङ्क्तित आरभ्य अधिक पाठः—

सपिण्डता ततः पश्चात् प्रपितामह उच्यते।
ऊर्द्ध्वं गणनया चाद्यः सर्व्वेषां प्रपितामहः।
पितामहो द्वितीयस्तु समानोदकधर्म्मता॥

(२) क ग तावन्मात्रा विशिष्यते।

षष्ठः पौत्रः सप्तमस्तु प्रपौत्र इति निश्चयः ।
एवं मृतानामेतेषां संजीवंस्तु[1] प्रपौत्रकः ॥
अविभक्तधनास्त्वेते सपिण्डाः परिकीर्त्तिताः ।
भ्रातृभिर्वा ततस्त्वन्येऽविभक्तार्थाः[2] सहोदराः ॥
[3]विभक्तार्थाः सकुल्यास्तु श्राद्धादौ लेपभागिनः ।
क्षत्र-विट्-शूद्रजातीनां सापिण्डान्तु त्रिपौरुषम् ॥
ब्राह्मणैरपि जातानामविभक्त[4]त्वभागिनाम् ।
विभक्तानाञ्च तेषान्तु मातुर्जातिरसंशयः ॥

सामान्यतः सम्बन्धमुक्त्वा आत्मा पिता इत्यादिना विशेषतो विवरणम् । तस्याप्यात्मनः प्रपितामहस्य यः पिता पितामहः प्रपितामहश्च ते सर्व्वे सपिण्डाः अष्टमश्चासपिण्ड इत्यर्थः । अधःप्रभृति गणनायामयमर्थः ।

ऊर्द्धप्रभृति गणनायान्तु स्वीयप्रपितामहस्य यः प्रपितामहः सर्व्वेषामाद्यः तस्यैव यः पितामहः स द्वितीयः तस्यैव च पिता स तृतीयः तस्यैवात्मसोदर्य्येण समानजातीयस्त्रीजातेन वैमातृ-भ्राता पितृव्यजातेन सहितश्चतुर्थः ।

तस्यैव सवर्णापुत्त्रः पञ्चमः तस्यैव सवर्णाजातः पौत्रः षष्ठः तस्यैव सवर्णाजातः प्रपौत्रः सप्तम इति साप्तपौरुषी सपिण्डता एवञ्च जीवन् प्रपौत्र एतेषां मृतानामपि सपिण्ड इत्यर्थः ।

---

(१) ख घ सजीवस्तु ।
(२) क अभिक्तत्वात् ।
(३) ख ग विभक्तत्वात् ।
(४) ग अविभक्तार्थ- ।

एते च सप्तपुरुषाः स्वभ्रातृभिः सहिता विभक्तधना अविभक्तधना वा उभयथाऽपि सपिण्डाः। ततस्तेभ्यः सप्तभ्यः पुरुषेभ्योऽन्येऽविभक्तधना अपि समानोदकाः सकुल्यास्तु स्वीयप्रपितामहस्य पितृ-पितामह-प्रपितामहास्त्रयो विभक्तार्था अपि पिण्डलेपभागिनः। क्षत्र-विट्-शूद्र इत्यादि शङ्खवचनसमानार्थम्। ब्राह्मणैरपीत्यपिशब्द उत्तरत्र सम्बध्यते अविभक्तार्थभागिनामपीत्यर्थः।

यदा च ब्राह्मणैर्जातानां क्षत्रिय-विट्-शूद्राणां त्रिपौरुषं सापिण्ड्यं तदा क्षत्रियजातानां क्षत्रियाणां विट्जातानां विशां शूद्रजातानां शूद्राणां साप्तपौरुषं सापिण्ड्यं क्षत्रजातयोर्विट्-शूद्रयोर्विड्जातस्य च शूद्रस्य च त्रिपौरुषमेव सापिण्ड्यमिति।

---

## अथ सद्यःशौचादि।

याज्ञवल्क्यः,—

ऋत्विजां दीक्षितानाञ्च यज्ञे कर्म्माणि कुर्व्वताम्।
सत्रि व्रति-ब्रह्मचारि-दातृ-ब्रह्मविदां तथा॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते॥

ज्योतिष्टोमादिसोमयज्ञे ऋत्विजां मधुपर्कदानोत्तरकालं

यदि सपिण्डादिजननमरणाशौचे भवतस्तदा तेषां यज्ञानुष्ठानार्थमशौचं नास्ति।

तथा यजमानानां सोमयागाङ्गदीक्षणीयेष्टौ कृतायां दीक्षितत्वं भवति तेन दीक्षणीयेष्ट्युत्तरकालं यजमानस्य यत् कर्त्तव्यं विहितं तत्राशौचं नास्ति। तथा सत्रिणां नित्यप्रवृत्तान्नदानानामन्नदानेऽशौचं नास्ति।

तथा चान्द्रायणादिव्रतानुष्ठाने प्रवृत्तानां तदनुष्ठानेऽशौचं नास्ति।

तथा ब्रह्मचर्य्याश्रमस्थितानां तदाश्रमधर्म्मानुष्ठानेऽशौचं नास्ति।

तथाऽवश्यं प्रत्यहं गोहिरण्यादिदाने प्रवृत्तानां तद्दानेऽशौचं नास्ति।

ब्रह्मविदाञ्च ब्रह्मज्ञानेन प्राप्तोत्कर्षानामशौचं नास्ति।

कदाचिद्दानकारिणामपि दाने प्रक्रान्तेऽशौचं नास्ति। विवाहेऽपि प्रक्रान्तेऽशौचं नास्ति। यज्ञे च प्रक्रान्ते दीक्षणीयात्पूर्व्वं सोमक्रियोत्तरकालं यजमानान्नभक्षणेऽशौचं नास्ति।

संग्रामे प्रवर्त्तमाने युध्यमानानां सपिण्डादिमरणेऽशौचं नास्ति।

प्रबलपरचक्रादिभिर्देशोपद्रवे क्रियमाणेऽशौचाभावः।

अत्यन्तदुर्भिक्षे औपसर्गिकात्यन्तमरकादिपीड़ायाञ्च नाशौचम्।

पराशरः,—

राज्ञाञ्च सूतकं नास्ति व्रतिनां न च सत्रिणाम्।
दीक्षितानाञ्च सर्व्वेषां यस्य चेच्छन्ति ब्राह्मणाः॥
दीक्षितेष्वभिषिक्तेषु व्रततीर्थपरेषु च।
तपोदानप्रसक्तेषु नाशौचं मृतसूतके॥

राज्ञामभिषिक्तानां क्षत्रियाणां व्यवहारादौ नृपतिकार्य्ये सूतकं मरणजननाशौचं नास्ति। व्रतिनां सत्रिणां दीक्षितानामिति व्याख्यातार्थम्। यस्य च श्रुताध्ययनानुष्ठानसंयुक्ता बहवो ब्राह्मणा अशौचाभावमिच्छन्ति तस्याप्यशौचं नास्ति।

दीक्षितेष्वभिषिक्तेष्वपि पूर्व्वश्लोकानु[1]बन्धः तीर्थसेवापर-दानपर-तपःपरायणानामशौचाभावाभिधाने [2]दृष्टान्तार्थः।

शङ्खलिखितौ,—

राज्ञां पुरोहितोऽमात्यः शुद्धिस्तस्य[3] तदाश्रया।
शिष्यस्य पैतृकं शौचं गुरुरेव प्रपद्यते॥
मातापित्रोरुपासीनो न गुरुः प्रतिपद्यते।
पिण्डोदकन्तु जनकगोत्रमेव प्रपद्यते॥

नृपतीनामात्मप्रतिनिधीभूतः पुरोहितः, तेन नृपतेरशौचे पुरोहिताशौचाभावात् नृपतेः शान्तिकपौष्टिकं पुरोहितेन स्वीयशुद्ध्या कर्त्तव्यम्। व्यवहारदर्शने तु नृपतिकार्य्ये सन्धिविग्रहचिन्तायाञ्च स्वयमेव शुद्धत्वात् स्वतएव कर्त्तव्यम्।

---

(१) ख घ पुस्तकद्वये -वाद एव।
(२) क ग पुस्तकद्वये -धानेन दृष्टार्थः।
(३) ख स्तेषां।

तथा [1][ शिष्यस्यापि पितृकुलाशौचे गुरोराचार्य्यादेरशौचाभावाच्छिष्योपकारार्थं शान्तिकपौष्टिकं गुरुणा कर्त्तव्यम् ] आश्रमधर्म्मानुष्ठाने तु ब्रह्मचारिणः स्वयं शुद्धिः। यदा गुरुकुलं त्यक्त्वा शिष्यो मातापितृगतो भवति तदा गुरोः शिष्यस्य शान्तिकपौष्टिके नाधिकारः।

पिण्डोदकदानन्तु ब्रह्मचारिणः पित्रादिमरणे ब्रह्मचारिणो वा मरणे गुरुणा न कर्त्तव्यं किन्तु ब्रह्मचारिजनकगोत्रजातेनैव।

यदा जनकगोत्रजातो नास्ति कश्चित् तदा पित्रादिमरणे ब्रह्मचारिणाऽपि पिण्डोदकदानं स्वयमेव कर्त्तव्यम्। ब्रह्मचारिमरणे गुरुणा। नृपादीनां सर्व्वाशौचाभावो नास्ति किन्तु कार्य्यविशेषेऽशौचाभाव इति व्यक्तमाह—

विष्णुः,—

अशौचं न राज्ञां राजकर्म्मणि, न व्रतिनां व्रते, न सत्रिणां सत्रे, न कारूणां स्वकर्म्मणि, न राजाज्ञाकारिणां तदिच्छया तथा न देवप्रतिष्ठा-विवाहयोः पूर्व्वसम्भृतयोः।

देवप्रतिष्ठायामारब्धायां यद्यशौचं भवति तदा देवप्रतिष्ठानुष्ठानेऽशौचं नास्ति तस्मादारब्धं समापनीयं विवाहे च व्याख्यातमेव।

आदिपुराणे,—

---

(१) क ग पुस्तकद्वये [ ] चिह्नितांशः पतितः।

विवाह-यज्ञयोर्मध्ये सूतकमभि[1] चान्तरा।
शेषमन्नं परैर्दद्यात् दातृन् भोक्तृंश्च न स्पृशेत्॥

दोषो न स्पृशेदित्यर्थः। विवाह-यज्ञयोर्मध्येऽन्यकुलजैर्भोजने क्रियमाणे भोजनमध्ये यद्यशौचं भवति तदा अशौचरहित-कुलान्तरजद्वारेणावशिष्टभोजनान्नपरिवेशनं कारयितव्यम्, एवं-विधेन विशेषेण यजमानस्यान्नदानेऽधिकारः। भोक्तुरपि दोषा-भावः। अन्यथापि दातृ-भोक्त्रोर्द्वयोरप्यनधिकारः।

एवञ्च विवाहे यज्ञे चेति याज्ञवल्क्येऽपि यज्ञग्रहणस्यायमेवार्थः सोमयागमध्ये दक्षिणाव्यतिरिक्तेऽपि गो-हिरण्यादिदाने यज-मानस्य प्रतिग्रहितुश्चादोष एव।

गोतमः,—

राज्ञाञ्च कार्य्यविरोधात् ब्राह्मणस्य स्वाध्यायानिवृत्त्यर्थम्। कार्य्यविरोधादिति ल्यब्लोपे पञ्चमी व्यवहारदर्शनविरोधं वीक्ष्ये-त्यर्थः सद्यःशौचमिति शेषः।

जावालः,—

ब्रह्मचारिणि भूपे च यतेः शिल्पिनि दीक्षिते।
यज्ञे विवाहे सत्रे च सूतकं न कदाचन॥

यतिश्चतुर्थाश्रमिणः सपिण्डादिजननमरणाशौचं नास्ति अन्यत् सर्व्वं व्याख्यातम्।

ब्रह्मचारिप्रभृतीनां सर्व्वाशौचाभावो नास्ति। किन्तु कार्य्य-विशेषार्थमिति यदुक्तम्—

(१) च सूतके सति।

तद्व्यक्तमाह छन्दोगपरिशिष्टे कात्यायनः,—

न त्यजेत् सूतके कर्म्म ब्रह्मचारी स्वकं क्वचित्।
न दीक्षणात् परं यज्ञे न कृच्छ्रादि तपश्चरन्॥
पितर्य्यपि मृते नैषां दोषो भवति कर्हिचित्।
अशौचं कर्म्मणोऽन्ते स्यात्त्र्यहं वा ब्रह्मचारिणाम्॥

स्वकं कर्म्म ब्रह्मचर्य्याश्रमविहितं वेदव्रतानि च एतद्व्यतिरिक्ते तु कर्म्मण्यशौचं न दीक्षणात्परं यज्ञसम्बन्धि कर्म्म न त्यजेदित्यर्थः। तथा प्राजापत्यादिप्रवृत्तः स्वकं प्राजापत्यादि कर्म्म न त्यजेत्। ब्रह्मचारिणस्त्वधिकं प्रारब्धकर्म्मसमाप्तौ प्रेतोदकदानं कृत्वा त्रिरात्राशौचम्।

[1]ब्रह्मपुराणे,—

गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः।
पश्चाद्दशाहे पतिते न भवेदिति निश्चयः॥
तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे।
स्नानन्त्ववभृथे यावत्तावत्तस्य न विद्यते॥
निवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने।
गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित्॥
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्ध[2]कर्म्मणि।
निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च॥

---

(१) क ग—पुस्तकद्वये—आदिपुराणे।
(२) ग—यज्ञ-।

देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्।
नैष्ठिकस्याथ वान्यस्य भिक्षार्थं प्रस्थितस्य वा॥
वानप्रस्थस्य चान्यत्र साधिकारस्य सर्व्वदा।
प्रतिग्रहाधिकाराच्च निवृत्तस्य न विद्यते।
गो-मङ्गलादौ वैश्यस्य रक्षाकालात्ययादपि॥
अपि दातृग्रहित्रोश्च सूतके मृतके तथा[1]।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु[2] कथञ्चन॥
विज्ञाते भोक्तुरेव स्यात् प्रायश्चित्तादिकं क्रमात्।
भोजनार्द्धे तु संभुक्ते[3] विप्रैर्दातु र्विपद्यते॥
यदा कश्चित्तदोच्छिष्टशेषं त्यक्त्वा समाहिताः।
आचम्य परकीयेण जलेनाशुचयो द्विजाः॥

न भवेदित्यादिना अशौचमिति वक्ष्यमाणमनुषज्यते। गृहीत-मधुपर्कस्येत्यनेन मधुपर्कग्रहणात् पूर्व्वं वरणे कृते अशौचमस्तीति दर्शयति।

महामखे सोमयागे दीक्षणीयेष्ट्युत्तरकालमवभृथस्नान पर्य्यन्त-मधीतवेदत्रयस्य यजमानस्याशौचाभावः।

प्राजापत्यादिकृच्छ्रे समाप्ते नैमित्तिकेषु काम्येषु होम-जप-यज्ञेषु समाप्तेषु तत्सम्पूर्णत्वार्थमवश्यं मया ब्राह्मणादयो भोजयितव्या इति गृहीतनियमो यस्तस्याशौचेऽन्यकुलजानामपि भुञ्जानानां दोषाभावः।

(१) ख—मृतके सति चान्तरा।
(२) ख—श्राद्धादिषु।
(३) घ—संवृत्ते।

तथा श्राद्धार्थं ब्राह्मणवरणक्रिययैव श्राद्धमारब्धं भवति। एवञ्च पितृभिरधिष्ठितेषु ब्राह्मणेष्वध्ययनविरतेषु सत्सु क्वचिद्दातृ जननादौ क्वचिदपि भोक्तृजननादौ वाऽशौचं नास्ति। तेन श्राद्धं कर्त्तव्यमेव।

नैष्ठिकस्य ब्रह्मचारिणोऽन्यस्य चतुर्थाश्रमिणो ऽशौचिभिक्षा-ग्रहणे दोषाभावः।

तपःकुर्व्वाणकब्रह्मचारिणो गृहस्थस्याशौचिभिक्षाग्रहणे दो-षोऽस्त्येव। तथा वानप्रस्थस्य वन्यफलमूलादिभिर्निर्वाहाभावे ग्रामादष्टग्रासभिक्षाहरणं विहितम्।

तेन वनादन्यत्र ग्रामे भिक्षाधिकारिणो वानप्रस्थस्य प्रसक्ति-सम्भवादशौचिभिक्षाग्रहणे दोषाभावः।

तथा सर्व्वथा प्रतिग्रहनिवृत्तस्य भिक्षायाचितवृत्तेरशौच्यन्न-ग्रहणे दोषाभावः।

तथा वैश्यानां गोऽजाविस्वस्त्ययनक्रियायामशौचाभावः। अन्यथाऽशौच-समाप्ति-प्रतीक्षायामुपसर्ग-व्याध्यादिभिरत्यन्तपीड़ने वृत्ते रक्षाकालोऽतिक्रमेत्।

तथा यदा दातुरशौचं भोक्तुर्वा दातृभोक्तृभ्यामुभाभ्यामपि न ज्ञायते। तदा श्राद्धभोजने स्वस्त्ययनभोजने वोभयोर्दोषाभावः।

यदा तु स्वीयमशौचं दाता न जानाति भोक्ता च जानाति तदा लोभाद्भुञ्जानस्य भोक्तुः प्रायश्चित्तमशौचं दातृतुल्यम्। तच्च क्रमादशौचोत्तरकालं प्रायश्चित्तमित्यर्थः।

भोजनार्द्धे त्वित्यस्य श्राद्धविषयत्वे प्रमाणाभावात्। पूर्व्व-

लिखितनिमन्त्रितेष्विति वचनविरोधाच्च स्नेहभोजननिमन्त्रणादि-भोजनविषयत्वमिति।

पराशरः,—

कारवः शिल्पिनो दासा वैद्यामात्यास्तथैव च।

राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः॥

कारवः सूपकाराद्याः शिल्पिनश्चित्रकारप्रभृतयः, वैद्याश्चिकित्सकाश्चिकित्सायां सद्यःशौचाः। अमात्या अक्षपटलिकादयो राजकार्य्ये राजानो व्याख्याताः। राजभृत्या राजेच्छया राजाज्ञापितार्थकरणे सद्यःशौचाः।

कारु-शिल्पि-दासानां यथा सद्यःशौचम् तदाह—

[1]ब्रह्मपुराणे,—

सूपकारेण यत् कर्म्म करणीयं नरेष्विह।

तदन्यो नैव शक्नोति तस्माच्छुद्धः स सूपकृत्॥

शिल्पिनश्चित्रकाराद्याः कर्म्म यत्साधयन्त्युत[2]।

तत्कर्म्म नान्यो जानाति तस्माच्छुद्धाः स्वकर्म्मणि॥

दास्यो दासाश्च यत्किञ्चित्कुर्व्वन्त्यपि च लीलया।

तदन्यो न क्षमः कर्त्तुन्तेन ते शुचयः स्मृताः॥

मनुः,—

राज्ञो माहात्मिके स्थाने सद्यःशौचं विधीयते।

प्रजानां परिरक्षार्थमासनञ्चात्र कारणम्॥

---

(१) ध पुस्तके आदिपुराणे।

(२) ग धारयन्त्युत। ख शोधयन्त्युत।

महान् आत्मा परमेश्वरस्य रूपं यस्मिन् स्थाने पदे सर्व्वाधिपत्यलक्षणे तत्र स्थितस्य सद्यःशौचं न राज्यभ्रष्टस्य।

यतो न्यायान्यायनिरूपणेन प्रजारक्षार्थं धर्म्मासनेऽवस्थानमशौचाभावे कारणम्।

यमः,—

दैवे भये समुत्पन्ने प्रधानाङ्गे विनाशिते।
पूर्व्वसङ्कल्पितेऽर्थे वा तस्मिन्नाशौचमिष्यते॥

दुर्भिक्षोपसर्गमरकादौ जाते, प्रधानाङ्गे नृपतौ, यतः सप्ताङ्गे राज्ये नृपतिः स्वामी प्रधानमङ्गन्तस्मिंश्च परचक्रेण विनाशिते अराजकत्वाद्राष्ट्रविप्लवेऽशौचाभावः।

तथा किञ्चिद्धर्म्मकार्य्यं पुष्करिण्यादि कर्त्तुं पूर्व्वं शौचकाले धने सङ्कल्पिते पृथक् कृते[1] तस्मिन् कार्य्येऽशौचं नास्ति।

सद्यःशौचानुवृत्तौ—

मनुः,—

डिम्बाहवे हतानाञ्च विद्युता पार्थिवेन च।
गो-ब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः॥

डिम्बाहवो नृपतिरहितं युद्धं तत्र हतानां मरणे सद्यःशौचम्।

तथा विद्युता वज्रेण हतानां नृपतिना चापराधे हतानां तथा गो-ब्राह्मणादिरक्षार्थं शस्त्रयोधेना[2]हतानामेतेषां पञ्चानां मरणे सद्यःशौचम्।

---

(१) बुद्धिस्थे वा इत्यधिकम्।

(२) ख—योधिनाम्।

यस्य चाज्ञाकारिणोऽशौचाभावं नृपतिरिच्छति तस्यापि स्त्रीयसूतकमृतकादौ सद्यःशौचम्।

पराशरः,—

ब्राह्मणार्थे विपन्नानां दण्डिनां गोग्रहेषु च।

आहवेषु विपन्नानामेकरात्रमशौचकम्॥

दण्डिनामिति त्रिष्वपि सम्बु(म्ब)ध्यते। गो-ब्राह्मणार्थे दण्डेन युध्यमानानां मरणे संग्रामे च दण्डेन युध्यमानानां मरणे एकरात्रमशौचम्।

एवञ्च गो-ब्राह्मणार्थे शस्त्रेण युध्यमानानां मरणे मनूक्तं सद्यःशौचम्।

बृहस्पतिः,—

डिम्बाहवे विद्युता च राज्ञा गो-विप्रपालने।

सद्यःशौचं हतस्याहुस्त्र्यहमन्ये महर्षयः॥

डिम्बाहवे शस्त्रैरभिमुखहतस्य सद्यःशौचम्।

बृहस्पतिः,—

लगुड़ादिहतस्य पराङ्मुखहतस्य त्रिरात्रम्।

वज्राभिघातेन मरणं भवत्वित्यभिसन्धाय सज्जीभूय स्थितस्य मरणे सद्यःशौचम्। प्रमादहतस्य मरणे त्रिरात्रम्। राज्ञा वधार्हापराधहतस्य सद्यःशौचम्। अल्पापराधहतस्य त्रिरात्रम्।

गो-विप्ररक्षार्थं शस्त्रेण युध्यमानस्याभिमुखहतस्य सद्यःशौचम्। पराङ्मुखहतस्य त्रिरात्रम्।

यमः,—

डिम्बाशनिहतानान्तु तथैव प्राणसत्रिणाम्।
नदी-श्वापद-दंष्ट्रिभ्यः सद्यःशौचं विधीयते॥

डिम्बो डिम्बाहवः प्राणसत्रिणः परार्थं मया प्राणा देया इति
ातसङ्कल्पा ये म्रियन्ते तेषां सद्यःशौचम्।

नदीतरणे बुद्धिपूर्व्वकं मृतानां व्याघ्रवन्यशूकरादिभिरात्मानं
[ुद्धिपूर्व्वकं घातितवताञ्च। शेषमुक्तार्थम्।

सद्यःशौचानुवृत्तौ शङ्खलिखितौ—

अथ शस्त्रानाशकाग्नि-रज्जु-भृगु-जल-विषप्रमापणेष्वेवमेव।

शस्त्रेण क्षुरक्षुरिकादिना उदरभेदनादिना कृतात्ममरणे
अनाशकेनाहारत्यागेन वा अग्निप्रवेशेन वा रज्वा वा आत्मानं
वृक्षादावुद्बध्य वा उच्चादतिकठिनतरभूमिपतनेन वा जलप्रवेश-
विषभक्षणाभ्यामेवमेव सद्यःशौचमित्यर्थः।

बुद्धिपूर्व्वकमरणे सद्यःशौचम् न प्रमादमरणे इति—
व्यक्तमाहाङ्गिराः,—

व्यापादयेदथात्मानं स्वयं योऽग्न्युदकादिषु[1]।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रिया॥
अथ कश्चित्प्रमादेन म्रियतेऽग्न्युदकादिषु।
अशौचं तत्र कर्त्तव्यं कर्त्तव्या चोदकक्रिया॥

अशौचं त्रिरात्रमिति काश्यपवचने स्फुटीभविष्यति। उदक-
क्रिया उदकेन क्रिया श्राद्धं तर्पणञ्च उदकक्रियासाहचर्य्यादग्नि-
दाहोऽपि।

(१) क ख—उदकादिभिः।

तथा कूर्म्मपुराणे,—

[२]कारवः शिल्पिनो वैद्या दासा दास्यस्तथैव च।
दातारो नियमी चैव ब्रह्मविद्ब्रह्मचारिणौ॥
सत्रिणो व्रतिनस्तावत्सद्यःशौचा उदाहृताः।
राजा चैवाभिषिक्तश्च प्राणसत्रिण एव च॥
यज्ञे विवाहकाले च देवयागे तथैव च।
सद्यःशौचं समाख्यातं दुर्भिक्षे चाप्युपद्रवे॥
डिम्बाहवहतानाञ्च विद्युता पार्थिवैर्द्विजैः।
सद्यःशौचं समाख्यातं शापादिमरणे तथा॥
अग्निमेरुप्रपतने वीराध्वन्यप्यनाशके।
ब्राह्मणार्थे च सन्न्यस्ते सद्यःशौचं विधीयते॥
नैष्ठिकानां वनस्थानां यतिनां ब्रह्मचारिणाम्।
नाशौचं कीर्त्यते सद्भिः पतिते च तथा मृते॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः।
न चाश्रुपातः पिण्डो वा कार्य्यं श्राद्धादिकं क्वचित्॥
व्यापादयेत्तथात्मानं स्वयं योऽग्नि-विषादिभिः।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकादिकम्॥
अथ कश्चित्प्रमादेन म्रियतेऽग्निविषादिभिः।
तस्याशौचं विधातव्यं कार्य्यञ्चाप्युदकादिकम्॥

तावदिति यावद्व्रतमित्यर्थः। प्राणसत्रिणः परार्थे त्यक्तप्राणाः। उपद्रवे राजविप्लवे। द्विजैर्ब्राह्मणैः।

---

(२) घ पुस्तके कारव इत्यादि श्लोकद्वयं नास्ति।

शापादीत्यादिशब्देनाभिचारस्तस्य ग्रहणम्। वीराध्वनि
हापथे अनाशके मरणपर्य्यन्तकृताहारपरित्यागसङ्कल्पे। ब्राह्म-
ार्थे ब्राह्मणरक्षार्थं हते सन्यस्ते मनूक्तसन्यासानुष्ठायिनि।

नैष्ठिकानामिति वनस्थविशेषणं मनूक्ततीव्रव्रततपश्चर्य्यानु-
ायिनां वनस्थानामित्यर्थः।

अन्यत्सर्व्वं स्मृत्यन्तरेषु व्याख्यातार्थम्।

सुमन्तुः,—

भृग्वग्निजलसंग्राम देशान्तरस्थ सन्यास्यशनि महाध्वनि-
ानामुदकक्रिया कार्य्या सद्यःशौचं भवति।

सन्यासी चतुर्थाश्रमी महाध्वनिकः शास्त्रानुमत्या महापथ-
मनेन सम्पादितमरणः।

सद्यःशौचम् नित्यं वेदाध्यापकैरग्निहोतृभिरेकाहाशौचिभिः
र्त्तव्यं श्राद्धतर्पणे तैरपि कर्त्तव्ये।

काश्यपः,—

अनशनहतानामशनिहतानामग्निजलप्रविष्टानां भृगुसंग्राम-
णान्तरमृतानां गर्भाणां जातदन्तानां त्रिरात्रेण शुद्धिः।

अनशनहतानां शास्त्रानुमत्या अशनिहतानां प्रमादादग्नि-
लसम्प्रविष्टानाञ्च प्रमादादेव मरणे प्रमादादेव भृगुपतने
णान्तरमृतानां मरणे दशाहाशौचिनां गर्भाणां सप्तमाष्टममासी-
ानां मरणे सर्व्वाश्रिनां सर्व्वविक्रयिणां सपिण्डानां त्रिरात्रमिति
ाख्यातम्।

जातदन्तानां मरणे निर्गुणयोर्मातापित्रोस्त्रिरात्रमित्युक्तमेव प्राक्।

जावालः,—

दुर्भिक्षे राष्ट्रसम्पाते शस्त्र-गो-ब्रह्मघातिते।
पतितेऽनशन[1]प्रेते विदेशस्थे शिशौ च न॥

नाशौचमित्यर्थः। राष्ट्रसम्पाते राज्यविप्लवादौ। शस्त्रघातिते सम्मुखयुद्धे गवा मारिते ब्राह्मणैश्च घातिते पतिते महापातकिनि अनशनप्रेते व्याख्यातार्थमेव। विदेशस्थे एकाहाशौचिनां शिशौ अजातदन्ते।

पराशरः,—

उपसर्गमृते चैव सद्यःशौचं विधीयते।

गौतमः,—

गोब्राह्मणहतानामन्वक्षम्।

अक्षं चक्षुरिन्द्रियं अनु यावच्चक्षुषा दृश्यत इत्यर्थः।

[2]वृहद्गार्ग्यः,—

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनादिभिः[3]॥

---

(१) घ अनशनि-।
(२) घ वृद्धगार्ग्यः।
(३) क ग पुस्तकद्वये अनशनाम्बुभिः।

तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः।
तृतीये तूदकन्दत्वा चतुर्थे श्राद्धमिष्यते[१]॥

शौचस्मृतेर्लुप्त इत्यतिवृद्धतया मूत्रोच्चारादिशौचं कर्त्तुं न शक्नोति तत्क्षणेऽप्यनुभूतं न स्मरति एवंविधेन भृग्वादिभिरात्मघातः कर्त्तव्यः तथा प्रत्याख्यातभिषक्क्रियेणापि।

एवञ्च विहितात्मघातेऽपि त्रिरात्रं वदन् प्राणान्तप्रायश्चित्तमृतानामपि दर्शयति त्रिरात्रम्। चतुर्थे श्राद्धमिष्यते इत्यनेन एकादशाहश्राद्धमशौचान्ते विहितमिति दर्शितम्।

एवञ्च क्षत्रिय-वैश्य-शूद्राणां त्रयोदश-षोड़शैकत्रिंशद्दिवसेषु तच्छ्राद्धम्।

यच्च शङ्खधरेणोक्तं वृद्धगार्ग्योक्त एव विषये ऽशौचान्ते [२][ अशौचान्ताद्द्वितीयेऽह्नीत्यादिना ] श्राद्धमिति तत्पश्चाल्लिखितमत्स्यपुराणवचनमनालोच्य,यानि च जातुकर्णादिनाम्ना वचनानि लिखितानि तानि भोजदेव-विश्वरूप-गोविन्दराज-कामधेनुकृद्भिरलिखितत्वान्मत्स्यपुराणवचनविरोधाच्च निर्मूलान्येव समूलत्वेऽपि म्लेच्छप्रायदेशे व्यवस्थितानि।

यथा यावदशौचपिण्डदानपक्षो देशविशेषव्यवस्थित आदिपुराणेऽभिधास्यते।

प्रत्याख्यातभिषक्क्रिय इति विवेचयत्यादिपुराणे व्यासः—

---

(१) ख घ चतुर्थे शुद्धिरिष्यते।

(२) क ग पुस्तके [ ] चिह्नितांशः पतितः।

दुश्चिकित्स्यैर्महारोगैः पीड़ितस्तु पुमान् यदि।
प्रविशेदनलं दीप्तं करोत्यनशनं तथा॥
अगाधं तोयराशिञ्च भृगोः पतनमेव च।
गच्छेन्महापथं वाऽपि तुषारगिरिमादरात्॥
प्रयागवटशाखाग्राद्देहत्यागं करोति वा।
स्वयं देहं प्रविनाश्य[1] काले प्राप्ते महामतिः॥
उत्तमान् प्राप्नुयाल्लोकान् नात्मघाती भवेत् क्वचित्।
महापापक्रियः स्वर्गे दिव्यान् भोगान् समश्नुते॥
एतेषामधिकारस्तु तपसां सर्व्वजन्तुषु।
नराणामथ नारीणां सर्व्ववर्णेषु सर्व्वदा॥
ईदृशं मृतकं येषां जीवितन्तु क्वचिद्भवेत्।
अशौचं स्यात्त्र्यहं तेषां रज्वानलहते तथा॥

अत्र ज्वलन-जल-भृग्वादयस्तपःशब्देनाभिधीयन्ते। महामतिरित्यन्यथाऽप्यवश्यम् सम्प्रत्येवमकर्त्तव्यमतः सात्विकवृत्त्या उत्कृष्टं परलोकं साधयामीति दृढ़तरबुद्धिः। महापापक्रिय इति महापातक्यपि स्वर्गं प्राप्नोति किंवाऽन्य इति सातिशयत्वप्रदर्शनार्थम्।

एतेषां ज्वलनप्रवेशनादीनां तपसां सर्व्वप्राण्यधिकाराभिधानमपि सातिशयार्थमेव ईदृशमिदमुत्कृष्टपरलोकसाधनमधिकारि-

(१) क ध— देहविनाशस्य।

विशेषानपेक्षं कर्म्म येनामानुषाणामप्यधिकारस्तस्माद्वर्णचतुष्टया-धिकारो युक्त इत्यर्थः।

जीवितन्तु क्वचिदित्यनेन एवंविधक्रियाप्रवृत्तानां यदि दैव-वशाज्जीवनं भवति तथापि पश्चान्मरणे त्रिरात्रमेवेति दर्शयति। वज्रानलहते तथेति व्याख्यातम्।

---

## अथ निर्हरणादि।

मनुः,—

दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्।
पश्चिमोत्तरपूर्व्वैस्तु यथायोगं द्विजन्मनः॥

अमाङ्गलिकत्वादत्यन्तापकृष्टक्रमेणाभिधानं आचारशिक्षा[१]-र्थञ्च। मृतशब्दस्य शूद्रसम्बन्धेनोच्चारणं द्विजातिषु साक्षादनु-च्चारणञ्चाचारशिक्षार्थमेव।

यथायोगं यथायुक्त्या अपकृष्टवैश्यक्षत्रियक्रमेणेत्यर्थः। द्विज-न्मनो द्विजातीन्।

हारीतः,—

न ग्रामाभिमुखं प्रेतं निर्हरेयुः।

निर्हरतां यदि वर्त्मनि ग्रामः स्यात्तदा तन्मध्ये न गन्तव्य-मित्यर्थः।

(१) ष— रक्षार्थञ्च।

मनुः,—

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नानयेत्।
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंसर्गदूषिता॥

स्वेषु तिष्ठत्स्वित्यनेन ब्राह्मणसम्भवे ब्राह्मणैर्निर्हरणं कर्त्तव्यमिति दर्शयति। ब्राह्मणाभावे क्षत्रियेण क्षत्रियाभावे वैश्येन वैश्याभावे शूद्रेण।

न च स्वेषु तिष्ठत्स्वित्यस्याविवक्षा युक्ता अभिधानवैफल्यप्रसङ्गात् हेत्वभावाच्च। अस्वर्ग्या हीति तु द्विजातिसम्भवविषयम्। उपक्रमोक्त—स्वेषु तिष्ठत्स्वित्यनुरोधात्[1]।

तेन मुख्यकल्पानुकल्पयोरसम्भवे ह्यापत्कल्पोऽयमिति सम्भवति। अन्यथा तु गुणभूतायाः शुद्धेरनुरोधेन प्रधानभूताया आहुतेरुपेक्षा[2] स्यात्।

विष्णुः,—

मृतं द्विजं न शूद्रेण निर्हारयेन्न शूद्रं द्विजेन।
पितरं मातरं पुत्त्रा निर्हरेयुः,—
न द्विजं पितरं मातरमपि शूद्राः।
मातरमपीति सपत्नमातरम्। द्विजातीयामित्यर्थः।

यमः,—

यस्यानयति शूद्रोऽग्निं तृणकाष्ठहवींषि च।
मन्यते ह्येष धर्म्मोऽस्ति स चाधर्म्मेण लिप्यते॥

---

(१) क ग पुस्तकद्वये इत्यर्थबोधात्।
(२) ग आहुतेः प्रतिपत्तिः।

एष 'शूद्रैर्मन्यते मन्त्रितैस्तृणादिभिर्दग्धस्य परमलोकप्राप्तिर्भविष्यतीति तत्तावन्नास्ति। उत्तरे विशेषतो दग्धो विप्रोऽधर्म्मेणैव संवध्यते।

तस्मादग्निस्तावच्छूद्रेण न नेतव्य एव।

काष्ठादिकमपि यदि ब्राह्मणाशक्त्यादौ शूद्रो नयति तथा चितायां ब्राह्मणैरेव दातव्यम्।

पराशरः,—

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः।
पदे पदे यज्ञफलमानुपूर्व्व्याल्लभन्ति ते॥
प्रेतस्पर्शनसंस्कारैर्ब्राह्मणो नैव दुष्यति।
वोढ़ा चाऽप्यग्निदाता च सद्यः स्नात्वा शुचिर्भवेत्॥

आदिपुराणे,—

अनाथं ब्राह्मणं दग्ध्वा क्षत्रियो वैश्य एव वा।
पितृमेधमहायज्ञफलं प्राप्नोति मानवः॥
राजानं नष्टसर्व्वस्वमनाथं वैश्ययोनिजम्।
तस्य पुण्यं महत् सद्यःस्नानेनैव शुचिर्भवेत्॥

राजानं क्षत्रियजातीयमित्यर्थः।

मनुः,—

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः।
अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते॥

---

(१) घ शूद्रो।

नास्य कार्य्योऽग्निसंस्कारो नाऽपि कार्य्योदकक्रिया।
अरण्ये काष्ठवत्त्यक्त्वा क्षिपेयुस्त्र्यहमेव तु॥
नात्रिवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया।
जातदन्तस्य वा कुर्य्यान्नाम्नि वापि कृते सति॥

ऊनद्विवार्षिकमकृतचूड़म्। अलङ्कृत्याङ्गुरीयकादिना वस्त्र-पुष्प-गन्ध-माल्यैरर्च्चितं ग्रामबाह्ये शुचिभूमौ स्थापयेयुः।

उत्तरकाले शीर्णदेहतया शक्यमप्यस्थिसञ्चयनं न कार्य्यम्। विश्वरूपेण त्वस्थिसञ्चयनं यस्यां भूमौ कस्यचिन्न कृतं तस्यां निदध्युरिति व्याख्यातम्।

अग्निदाह तर्पण-श्राद्धानि चोनद्विवार्षिकस्य न कार्य्याणि।

ग्रामबाह्ये च यत् स्थापनं तदरण्येऽकृष्टभूमौ, काष्ठवदित्यनेन च शोको न कार्य्य इत्युक्तम्। अशौचमेव तु त्र्यहं कार्य्यम्।

एतच्च मातापित्रोः सपिण्डानाञ्च वृत्त्याद्यपेक्षया व्याख्यातमेव। नात्रिवर्षस्येत्यनेन पूर्व्वश्लोकोक्त एवोदकक्रियाभावोऽनूद्यते[1] विकल्पेन कर्त्तव्यताविधानार्थम्।

एतेनैतदुक्तं भवति। ऊनद्विवार्षिकस्य दन्तजन्मकालात् प्रभृति दाह-तर्पण-श्राद्धेषु क्रियमाणेषु प्रेतोपकारो भवति। कर्त्तुस्त्वकरणे प्रत्यवायाभावः। पूर्णद्विवर्षस्य तु एकदिनाधिकस्याप्यकरणे कर्त्तुः प्रत्यवायस्तेनावश्यं कार्य्यम्।

---

(१) क ग अर्थाल्लभ्यते।

नाम्नि वापीत्यतिशयार्थं कृतनाम्न एव कर्त्तुमुचितम्। किमुत जातदन्तस्येत्यर्थः।

यत्तु विश्वरूपेण—नात्रिवर्षो द्विवर्षाधिकोऽसम्पूर्णतृतीयवर्ष इति व्याख्यातम्। तज्जातदन्तस्येत्यनेन विरुद्धम्।

यदि हि नात्रिवर्षस्येत्यनेन जातदन्तस्यापि ग्रहणङ्कृतं तदैव जातदन्तस्येत्यभिधानं सङ्गच्छते।

[1][ अत्र चायं भावः—आत्रिवर्षपदेन वर्षद्वयादूर्द्ध्वं तृतीयवर्ष एवोच्यते इति भवद्भिरुक्तं तथा च जातदन्तस्यैवेत्यनेन द्विवर्षात्यन्तरीण एवोच्यते।

अन्यथा वर्षद्वयादूर्द्ध्वमित्यस्य भवद्व्याख्याऽसङ्गतेः। वर्षत्रयं यावदेव शास्यते ततश्च द्विवर्षे दाहः न त्रिवर्षे इति वैषम्यं स्यात्।

अथ वर्षादूर्द्ध्वमिति न वाच्यं तथा च वर्षत्रयपर्य्यन्तमेव दाहोऽनावश्यकोऽस्तु इति व्याजेन निराकुर्व्वन्नाह ऊनेति ]।

यत ऊनत्रिवर्षस्य ग्रामबहिःस्थापनानन्तरं कर्त्तव्यं व्यक्तमाह—

याज्ञवल्क्यः,—

ऊनद्विवर्षं निखनेन्न कुर्य्यादुदकं ततः।
आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्मृतः॥
यमसूक्तं तथा गाथां [2]पठद्भिर्लौकिकाग्निना।
स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत्[3]॥

(१) क पुस्तके [ ] चिह्नितांशः पतितः।

(२) घ जपद्भिः।

(३) घ अर्थयेत्।

निखनेदिति स्थाल्यादिमध्यकृतं प्रोप्तकुर्य्यादित्यर्थः।

इतरो द्विवर्षाधिक उपनयनपर्य्यन्तम्। मृतो ज्ञातिभिर्मिलितै र्यमसूक्तमृग्वेदाध्येतृप्रसिद्धम् गाथाश्च यमदैवत्याः [1]पठद्भिः श्मशानं नेतव्यः।

ततो लौकिकाग्निना दग्धव्यः। चाण्डालाद्यग्निस्तु न ग्राह्यः।

चाण्डालाग्नेरमेध्याग्नेः सूतकाग्नेश्च कर्हिचित्।
पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम्॥

इति देवलवचनात् चाण्डालाद्यग्निस्पर्शमात्रे दोषाभावः।

उपेतश्चेदिति—यद्युपनीतस्तदा आहिताग्नेरग्निहोत्रिणो[2] दाहे या आवृदितिकर्त्तव्यता तया दहेत्। भूमिसंस्कारादिकं कुर्य्यादित्यर्थः।

अर्थवदिति यावत्येतिकर्त्तव्यतया अर्थः प्रयोजनमस्ति तावत्या दहेत।

अस्मात्त्वमभिजातोऽसीत्यस्य तु दाहमन्त्रस्यानग्निं प्रति प्रतिषेधात् प्रयोजनाभावस्तेनासौ मन्त्रो न प्रयोक्तव्यः।

पारस्करः—

यद्युपेतो भूमिजोषणादि समानम् आहिताग्नेरोदकस्यान्तगमनात्। शालाग्निना दह्येरन् समाहिताग्निश्चेत्तूष्णीं ग्रामाग्निनेतरम्। उपेतो व्याख्यातः।

---

(१) घ जपद्भिः।
(२) घ -होत्रणः।

जोषणं—जुषी प्रीति-सेवनयोरिरिति धात्वनुसारात् सेवनं तेन भूमिजोषणं भूमिसंस्कारः तदारभ्य स्नानार्थोदकसमीपगमनपर्य्यन्तं कर्म्म श्मशानं गत्वा आहिताग्नेः श्रौताग्निमतः क्रियते तत्सर्व्वमुपनीतमात्रस्यापि कर्त्तव्यम्।

आहिताग्निश्चेदिति स्मार्त्ताग्निमान् यदि तदैनं स्मार्त्ताग्निमन्तं शालाग्निना दहेयुः।

श्रौताग्निमतस्तु श्रौताग्निना दाहः श्रुतावेवोक्तः।

इतरमग्निरहितं ग्रामाग्निना दहेयुस्तूष्णीमस्मात्त्वमभिजातोऽसीति मन्त्रपाठं विनैवेत्यर्थः।

तस्य च मन्त्रस्य सामर्थ्यपर्य्यालोचनया अग्निरहितं प्रति निषेधः। भोऽग्ने! त्वमस्माद्दग्धव्यात् प्रेताज्जातोऽसि अयं पुनः प्रेतस्त्वत्सकाशात् पुण्यलोके[1] जायताम्। असाविति प्रेतस्याहुतित्वेन निर्द्देशः।

स्वर्गलोकप्राप्त्यर्थं त्वयि प्रक्षिप्त इति स्वाहाशब्दार्थः।

एवञ्चाग्निरहिते लौकिकाग्निना दग्धव्येऽसमवेतार्थत्वात् अप्रयोगः सिद्धो गृह्यपरिशिष्टकाराभ्यां[2] स्पष्टीकृतः।

तस्माद्वक्ष्यमाणवराहपुराणोक्तमन्त्रस्य समवेतार्थत्वात् अग्निरहितेऽपि प्रयोगः कर्त्तव्यः।

आदिपुराणे,—

---

(१) ख प्रेतलोके।

(२) घ -कात्यायनाभ्यां।

म्रियमाणो बहिर्नेयः स्थाप्यः शूद्रो गृहेऽथवा।
मृण्मयान्यथ भाण्डानि सर्व्वाणि च समुत्सृजेत्॥
मगा भूमौ निखन्यन्ते दरदांश्च मृतान् सदा।
आसद्य[1] वृत्ते गच्छन्ति लुप्तकाश्च स्वबान्धवम्॥
घनच्छाये[2] सुगुप्ते तु तिरो वर्षाणि वर्षति।
ततः संवत्सरे पूर्णे सर्व्वसम्भारसम्भृताः॥
शुष्कं तं जाह्नवीतोये प्रक्षिप्य प्रदहन्ति च।
प्रेतः स्नातो वस्त्रमाल्यैः पुष्पगन्धैरलङ्कृतः॥
श्मशानभूमिं नेतव्यो बान्धवैरनहङ्कृतैः।
मुखे निधाय कांस्यं वा सुवर्ण-मणि-विद्रुमम्॥
चतुर्व्विधेन वाद्येन कुर्य्युः कोलाहलं महत्।
भूमौ शनै र्निधातव्यो यावत् प्रेतस्य जीवितम्॥
गतैस्तु नवभिः प्राणैर्नासौ देहं प्रमुञ्चति।
सर्व्वेषामेव भूतानां स तु वायुर्धनञ्जयः॥
प्रीत्यप्रीतिविभेदांश्च जानाति हृदये स्थितः।
ध्वनिमाक्रोटनं कोपं करोति कुणपेशयः॥
इति मत्वा शनैः स्थाप्यो योज्यः स्नानादिभिः शवः।
नदीमध्ये अनाथस्तु दग्धव्यश्च न चान्यथा॥
यस्मिन् देशे जलं नास्ति तुषारं वा न विद्यते।
तत्र तोयकथा कार्य्या वक्तव्यं वा हिमं हिमम्॥

(१) घ आसज्य.........लुब्धकाश्च स्वबान्धवम्।
(२) ग घ घनच्छायासु।

आसन्नमरणो मानुषो गृहाद्बहिः कार्य्यः। शूद्रस्तु गृह एव स्थाप्यो न बहिर्निःसारणीयः।

अथवेति शूद्रविषये व्यवस्थितविकल्पः। तेन ब्राह्मण-क्षत्रिय-वैश्या बहिर्निसारणीयाः—न शूद्रः। चतुर्भिरपि वर्णैः समस्त-मृण्मयभाण्डत्यागश्च कार्य्यः।

मगा मगदेशोद्भवा मानुषाः। स्वबान्धवैर्भूमौ प्रोप्यन्ते अतस्तैरयं देशधर्मो नातिक्रमणीयः।

दरददेशधर्म्मस्तु घनच्छायवृक्षे प्रच्छादितप्रदेशे वर्षमेकमव-लम्ब्य स्थापनम्। ततो गङ्गाजलप्लावितस्य दाहः।

तिरो वर्षाणीति मेघे वर्षति वर्षाणि वर्षणानि तिरोधातुं सुगुप्ते सम्यक् छादिते वृक्ष इत्यर्थः।

प्रेतःस्नात इत्यादिना यज्ञीयदेशवासिनां प्रेतसत्कारविधि-माह बान्धवैरनहङ्कृतैरिति—

बान्धवानामेवायमुपदेशः। अस्माभिरपि प्रेतवहनं कार्य्य-मित्यहङ्कारं त्यक्त्वा अवश्यं यथा यथा सन्निधानविशेषः। तथा तथातिशयेन वहनं कार्य्यमन्यथा प्रत्यवायः स्यात्।

प्रेतवहनकाले तु विश्रामार्थं यदि भूमौ प्रेतः स्थाप्यते। तदा शनैः शनैः स्थाप्यः।

यतो नवस्तु प्राणेषु गतेष्वपि धनञ्जयनामा वायुभूतः प्राणः प्रेतदाहपर्य्यन्तं देहं न मुञ्चति मनोगतस्वरसास्वरसञ्च जानाति अस्वरसं बुद्ध्वा कोपादिकं करोति तत्कोपाच्च काचि-दापद्भवति।

वराहपुराणे,—

कण्ठस्थानगतो जीवो भीतो विभ्रान्तमानसः।
ज्ञात्वा तु विह्वलस्तत्र शीघ्रं निःसार्य्यते गृहात्॥
कुशास्तरणशायी च दिशः सर्व्वाणि पश्यति।
दापयेत् स्नेहभावेन भूमिं द्वेधा द्विजातिषु॥
सुवर्णं वा हिरण्यं वा यथोत्पन्नन्तु माधवि।
तत्र तस्य हितार्थाय सम्प्रदानं[1] विशिष्यते॥
तथैव दीपदानेन क्षिप्रं मुच्येत किल्विषात्।
तथा श्रुतिपथं दिव्यमुच्चैः कर्णे च श्रावयेत्॥
दृष्ट्वा सुविह्वलं ह्येतं यममार्गानुसारिणम्।
प्रयाणकाले च ततो मन्त्रेण विधिपूर्व्वकम्॥
मद्भक्तेनैव दातव्यं सर्व्वं संसारमोक्षणम्।
मधुपर्कं ततो गृह्य इमं मन्त्रमुदीरयेत्[2]॥
ॐ सङ्गच्छ मागच्छ ममैव देहे
मधुपर्कं संसारमोक्षणं शरीरं
शवमागन्तुकमनित्यं हन्मि शरीरशोधनम्।
गृह्ण लोकनाथप्रोक्तमिदं मधुपर्कम्॥
एतेन मन्त्रेण मधुपर्कोत्तमं दद्यात्।
पुरुषो मृत्युकाले तद्दत्वा संसारमोक्षणम्।
एवं विनिःसृतैः प्राणैः संसारं स न गच्छति॥

---

(१) घ लोकहितार्थाय गोप्रदानम्।

(२) ख -उदाहरेत्।

मज्जावनस्पतिं गत्वा गन्धानि विविधानि च।
घृततैलसमायुक्तं कृत्वा देहविशोधनम्॥
तेनाभ्यज्य गुरून् स्नाप्य नयेत[1] पितरं वनम्।
दक्षिणाशिरसङ्कृत्वा सचेलन्तु शवन्तथा॥
तीर्थस्यावाहनं कृत्वा स्नापनं तत्र कारयेत्।
गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः॥
कुरुक्षेत्रञ्च गङ्गाञ्च यमुनाञ्च सरिद्वराम्।
कौशिकीं चन्द्रभागाञ्च सर्व्वपापप्रणाशिनीम्॥
भद्रावकाशां [2]गण्डक्यां शतद्रुं पनसन्तथा।
वैणवञ्च वराहञ्च तीर्थं पिण्डारकन्तथा॥
पृथिव्यां यानि तीर्थानि चतुरः सागरांस्तथा।
ध्यात्वा तु मनसा सर्व्वे कृतस्नानं गतायुषम्॥
देवाश्चाग्निमुखाः सर्व्वे गृहीत्वा तु हुताशनम्।
गृहीत्वा पाणिना चैव मन्त्रमेवमुदीरयेत्॥
कृत्वा तु दुष्करं[3] कर्म्म जानता वाऽप्यजानता।
मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम्॥
धर्म्माधर्म्मसमायुक्तं लोभ-मोहसमावृतम्।
दहेयं सर्व्वगात्राणि दिव्यान् लोकान् स गच्छतु॥

(१) घ नाययेत्।
(२) घ गण्डकीञ्च सरयूं।
(३) ख -सुदुष्करं।

एवमुक्का ततः शीघ्रं कृत्वा चैव प्रदक्षिणम्।
ज्वलमानस्तथा वह्निं शिरःस्थाने प्रदापयेत्।
चातुर्वर्ण्येषु संस्थानमेवं भवति पुत्रिके ॥

सर्व्वाणीति नपुंसकलिङ्गनिर्देशः स्त्रीलिङ्गत्वेऽपि दिशामागमिकत्वात् दिशः पश्यति भूतानि वा पश्यतीति सम्बन्धः।

भूमिपदं पृथिवीसम्बोधनार्थम्। सुवर्णं वा हिरण्यं वेति वाद्वयं समुच्चयार्थम् द्वेधेति प्रकारद्वयस्योक्तत्वात्। हिरण्यं रजतं दिव्यलोकगमनमार्गं श्रुत्युक्तं कर्णे श्रावयेत्।

यथालिखितमन्त्रेण भगवन्तं वासुदेवमुद्दिश्य मधुपर्कं मुमूर्षुर्दापयितव्यः। मज्जावनस्पतिं निर्य्यासप्रधानं वनस्पतिं वटप्लक्षाश्वत्थोडुम्बराणामन्यतमं गत्वा निर्य्यासमानीय चन्दनागुरु-कर्पूर-कुङ्कुम-मृगमद जातीफलानि च पिष्ट्वा [1]मिश्रीकृत्यानीय घृततैलाभ्यां निर्य्याससर्व्वगन्धसहिताभ्यामभ्यज्य शवं नयेयुः।

ततो गयादीन्युक्तानि तीर्थानि स्मृत्वा स्नानं कारयितव्यम्। ततः कृत्वेति मन्त्रेणाग्निदानम् वर्णचतुष्टयस्यापि।

आदिपुराणे,—

सगोत्रजैर्गृहीत्वा तु चितामारोप्यते शवः।
अधोमुखो दक्षिणादिक्चरणस्तु पुमानिति।
उत्तानदेहा नारी तु सपिण्डैरपि बन्धुभिः॥

दक्षिणादिक्चरण इत्यनेन उत्तराशिरस्त्वमुक्तम्।

---

(१) घ पिष्टानि मिश्रीकृतानि।

यच्च वराहपुराणे,—दक्षिणाशिरस्त्वमुक्तं तत्र दक्षिणाशिरस्त्वं छन्दोगानां लिखिष्यमाणछन्दोगपरिशिष्टवचनात्। अन्येषान्तूत्तराशिरस्त्वम्।

यत्तु कात्यायनसूत्रे प्राक्शिरस्त्वं तदग्निहोत्रिणां यजुर्वेदिनाम्।

शङ्खः,—

मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निना।
दाहादूर्द्ध्वमशौचं स्याद् यस्य वैतानिको विधिः॥

वैतानिकः श्रौताग्निसम्बन्धी। तेन संयोगो यस्य नाग्निनेति श्रौताग्निना यस्य न सम्बन्ध इत्यर्थः।

एवञ्च केवलस्मार्त्ताग्निमतोऽपि मरणात् प्रभृत्येवाशौचम्।

यमः,—

आहिताग्निस्तु यो विप्रो दह्यते च वृथाग्निना।
ब्राह्मण्यात् स परिभ्रष्टः शूद्रयोनौ प्रजायते॥

आहिताग्निः श्रौताग्निमान् वृथाग्निना लौकिकाग्निना। एवं श्रौताग्निविशेषणात् केवलस्मार्त्ताग्निमतः प्रमादाल्लौकिकाग्निना दाहे न दोषः।

कूर्म्मपुराणे,—

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः।
अनाहिताग्निदाह्येन[१] लौकिकेनापरो जनः॥

---

(१) ग -र्गाह्येण।

यथान्यायं पात्रन्यासादिपूर्व्वकम्।

छन्दोगपरिशिष्टं कात्यायनः—

हुतायां सायमाहुत्यां दुर्ब्बलश्चेद्गृही भवेत्।
प्रातर्होमस्तदैव स्याज्जीवेच्चेत् स[1] पुनर्न वा॥
दुर्ब्बलं स्नापयित्वा तु शुद्धचेलाभिसंवृतम्।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत्॥
घृतेनाभ्यक्तमाप्लाव्य सुवस्त्रं सूपवीतिनम्।
चन्दनोक्षितसर्व्वाङ्गं सुमनोभिर्विभूषयेत्॥
हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु।
मुख्येष्वथ पिधायैनं निर्हरेयुः[2] सुतादयः॥
आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम्।
एकोऽनुगच्छेत्तस्यार्द्धमर्द्धपथ्युत्सृजेद्भुवि॥
अर्द्धमादहनं प्राप्त आसीनो दक्षिणामुखः।
सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत्॥
अथ पुत्रादिराप्लुत्य कुर्य्याद्दारुचयं महत्।
भूप्रदेशे शुचौ युक्ते पश्चाच्चित्यादिलक्षणम्॥
तत्रोत्तानं निपात्यैनं दक्षिणाशिरसम्मुखे।
आज्यपूर्णां स्रुचं दद्यात् दक्षिणाग्रं नसि स्रुवम्॥
पादयोरथवा प्राचीमरणिं शिरसीतराम्।
पार्श्वयोः सूर्पचमसौ सव्यदक्षिणयोः क्रमात्॥

(१) ख स्वः।

(२) घ निर्व्वहेयुः।

मुषलेन सह न्युञ्जमन्तरुर्व्वोरुदूखलम्।
चात्वं ? विलोकमत्रैवमनश्रुनयनो विभोः॥
अपसव्येन कृत्वैतत् वाग्यतः पितृदिङ्मुखः।
अथाग्निं सव्यजान्वक्तो दद्याद्दक्षिणतः शनैः॥
अस्मात्त्वमभिजातोऽसि त्वत्तोऽयं[1] जायतां पुनः।
असौ[2] स्वर्गाय लोकाय स्वाहेति यजुरीरयन्॥
एवं गृहपतिर्दग्धः सर्व्वं तरति दुष्कृतम्।
यश्चैनं दाहयेद्विद्वान्[3] प्रजां प्राप्नोत्यनिन्दिताम्॥
एवमेषोऽग्निमान् यज्ञपात्राम्बुषविभूषितः।
लोकानन्यानतिक्रम्य परम्ब्रह्मैव विन्दति॥

सायं होमादि प्रातर्होमान्तं नैकं[4] कर्म्म तत्र सायंहोमे कृते यदि गृहपतिरासन्नमरणो भवति तदा तस्मिन्नेव काले प्रक्रान्ता-परिसमापनदोषपरिहारार्थमपकृष्यैव प्रातर्होमः कर्त्तव्यः।

अपकृष्य कृते च प्रातर्होमे यदि दैवात् गृहपतेर्जीवनं भवति तदा प्रातःकाले पुनः प्रातर्होमो न कर्त्तव्यः। वा शब्दः सिद्धान्तवत्त्वख्यापनार्थः। तुल्यश्रुतित्वान्नेतरैः स धर्म्मः स्यादि-त्यादिवत्।

प्रकृते च दुर्बलत्वे पुनर्दुर्बलग्रहणमतिशयार्थं तेन मृतं स्नापयित्वा शुद्धेन वाससा सर्व्वशरीरमाच्छाद्यास्तीर्णकुशायां भूमौ दक्षिणाशिरसं स्थापयेत्।

(१) क ग पुस्तकद्वये हृदयं। (३) घ- विद्वान्।
(२) घ सोऽपि। (४) घ -मेकं।

ततो घृतेनाभ्यज्य पुनः स्नापयित्वा पूर्व्ववस्त्रं त्याजयित्वा वासोऽन्तरं नवं प्रक्षालितं वाऽस्फुटितमशीर्णं वा परिधाप्य उत्तरीयवस्त्रं यज्ञसूत्रञ्च दत्वा चन्दनेन सर्व्वाङ्गाण्युपलिप्य पुष्पैर्विभूषयेत्।

चन्दनग्रहणमगुरु-कर्पूराद्युपलक्षणार्थम्। ततो मुख्येषु मुखसम्बन्धिषु कर्णच्छिद्रद्वय-नासिकाच्छिद्रद्वय चक्षुश्छिद्रद्वय-मुखात्मकेषु सप्तच्छिद्रेषु सप्तसुवर्णखण्डिकाः प्रक्षिपेत्।

ततो वस्त्रान्तरेण पिधाय सुतभ्रातृप्रभृतयो ये ये यथा सन्निहितास्ते ते हरेयुः।

तत्र च प्रथमं प्रेतो नेतव्यः। तत्र एको ब्राह्मणोऽग्निं गृहीत्वा गच्छेत्। ततोऽन्यो ब्राह्मणो आमस्थाल्यादिकृतमन्नं गृहीत्वा गच्छेत्।

तस्यान्नस्यार्द्धमर्द्धवर्त्मनि एवमेव त्यजेत्। तत आदह्यतेऽस्मिन्नित्यादहनं श्मशानं तत्प्राप्तः पुत्रादिरग्निदाता आप्लवनं कृत्वा वामं जान्वाच्य भूमिन्नीत्वा दक्षिणामुख उपविष्टस्तिलसहितमपरमन्नार्द्धं पिण्डदानेतिकर्त्तव्यतया उत्सृजेदित्यनुषङ्गः।

पिण्डदानेतिकर्त्तव्यता च—ईदृशीभूमिर्गोमयेनोपलिप्या कुशमूलेन दक्षिणाग्ररेखाकरणम् रेखाभ्युक्षणं नामगोत्राभ्यां रेखायामवनेजनम्। कुशास्तरणं नाम-गोत्राभ्यामवनेजनस्थाने पिण्डदानं नाम-गोत्राभ्यामेव पिण्डोपरि पुनरवनेजनम्।

यथाशक्ति तुष्णीं गन्ध्यादिदानम्। आङ्पूर्व्वादञ्चतेःक्त्वाप्रत्यये ल्यपि आच्येतिरूपम्।

ततोऽग्निदाता आप्लवनं कृत्वा चितायोग्यायां समायां शुचौ-भूमौ लक्षणं कुर्य्यात्। लक्षणञ्चाग्निसंस्थापनार्थं पञ्चभूसंस्कार उच्यते।

तत्र प्रथममेव करशोधनम्। ततो गोमयेनोपलेपनं ततः स्वगृह्योक्तरेखाकरणम्। रेखामार्ज्जनं रेखाभ्युक्षणम्।

ततोऽग्निदाता आप्लवनं कृत्वा लक्षणोपरि महद्दारुचयं कुर्य्यात्। ततो दारुचयोपरि वस्त्रद्वयसहितमेव दक्षिणाशिरस-मुत्तानं शवमारोपयेत्।

ततो घृतपूर्णां स्रुचं मुखे दद्यात् ततो घृतपूर्णं स्रुवं दक्षिणाग्रं नासिकायां दद्यात्। ततोऽधरारणिं प्रागग्रां पादयोर्दद्यात्। ततो उत्तरारणिं प्रागग्रामेव शिरसि दद्यात्। वामपार्श्वे सूर्पं दक्षिणपार्श्वे चमसं मुषलमुदूखलञ्चान्तर्वेलिकञ्च उरुद्वयमध्ये दद्यात्।

एवं पात्रन्यासं कृत्वा सव्यजान्वक्तः—अस्मात्त्वमभिजातो-ऽसीत्यनेन मन्त्रेण शिरसि दक्षिणतोऽग्निं शनैर्दद्यात्।

अञ्जु व्यक्ति-क्षरण गतिष्वित्यस्य निष्ठायामक्त इति रूपम्। सव्यं जानु अक्तं भूमिगतं यस्य स सव्यजान्वक्तः।

एतच्च पात्रन्यासाद्यग्निदानपर्य्यन्तं कर्म्माऽनश्रुनयनो निर्भयश्च कुर्य्यात्।

यमः,—

यजमाने चितारूढे पात्रन्यासे तथा कृते।
वर्षाद्यभिहृते चाग्नौ ततः पृच्छामि याज्ञिकाः॥

शेषं लब्ध्वार्द्धदग्धेन[1] निर्दग्धं तत्र कारयेत्।
शेषालाभे तथा कुर्य्यात् दग्धशेषस्य वा पुनः।
अप्सु प्रास्यन्ति तं शेषमाग्नेय्यस्ताः स्मृताः पुनः॥

वर्षादीत्यादिशब्देन वात्याया ग्रहणं विस्तरतरकल्लोलस्य च।

भो याज्ञिकाः पृच्छामि किं क्रियतामित्यध्याहारेण सम्बन्धः। उत्तरं यद्यरण्योः शेषो लभ्यते तदा तेनैवार्द्धदग्धेन शेषेण मन्थनं कृत्वा अग्निमुत्पाद्य दग्धशेषं यजमानं निःशेषं दहेदित्याकूत्यैव पूरणम्।

यदि पुनररणिशेषो न लभ्यते तदा दग्धशेषस्य यजमानस्य यथानन्तरं वक्ष्यामस्तथा कुर्य्यात्।

तदेवोच्यते—अप्सु प्रास्यन्तीति प्रक्षिपन्ति असु क्षेपण इति धात्वनुसारात् प्रास्यन्तीति। पञ्चमलकारोऽयं विध्यर्थः।

पुनःशब्दो यस्मादर्थे निपातानामनेकार्थत्वात्। ता आप आग्नेय्यः अग्निसम्बन्धिन्योऽग्नेः कारणभूता इत्यर्थः। कारणे च कार्य्यंस्विद्यते एवेत्यग्नावेव प्रक्षेपः कृतो भवतीति हेतुमन्निगदस्यार्थः।

वशिष्ठः,—

आहिताग्निश्चेत् प्रवसन् म्रियेत पुनः संस्कारं कृत्वा शववच्छौचमिति गोतमः।

आहिताग्निरग्निहोत्री पुनः संस्कारं कृत्वेति शरीरस्याप्राप्त्या

---

(१) क ख सकण्ठदग्धेन।

प्रथममलाभे पलाशपत्रैः पुरुषप्रतिकृतिं कृत्वा दाहे कृते यदि शरीरमस्थीनि वा लभ्यन्ते तदा पुनःसंस्कारं कृत्वा तस्मादेव संस्कारात् प्रभृति शावाशौचम्। गौतमग्रहणं पूजार्थम्।

आदिपुराणे,—

आहिताग्नौ विदेशस्थे मृते सति कलेवरम्।
निधेयं नाग्निभिर्यावत् तदीयैरपि दह्यते॥
तावच्च दक्षिणाग्रैश्च कुशैरास्तीर्य्य वेदिकाम्।
अधोमुखीन्तु समिधं धारयित्वा विधानवित्॥
परकीयेण वत्सेन दुग्ध्वा तद्गाञ्च तद्गृहे।
गोक्षीरेणाथ तेनैव जुहुयादग्निहोत्रकम्[1]॥
पश्चादग्नीन् समारोप्य यज्ञभाण्डानि तान्यपि।
उपयच्छेत विप्राय ततो दृश्यदमेव हि।
मथित्वाऽग्निप्रणयनं कृत्वा तं कुणपं दहेत्॥
निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजन्तथा॥
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं क्वचित्।

इति छन्दोगपरिशिष्टोक्तविधिमाश्रित्य स्वभार्य्यायामग्निं निक्षिप्य कार्य्यवशादग्निहोत्री देशान्तरगतो यदि म्रियते तदा यावता कालेन स्वदेशमानीय श्रौतैः[2]स्वाग्निभिर्दग्धुं शक्यते तावन्तं कालं शरीरं निधेयं रक्षणीयम्। नाग्न्यन्तरेण दग्धव्यमिति यावत्।

---

(१) क अग्निहोत्रिकम्।
(२) घ स्मार्त्ताग्निभिर्वा।

तच्छरीरानयनकालाभ्यन्तरे तस्याग्निषु ऋत्विगादिभिर्यथाऽग्निहोत्रं कर्त्तव्यम् तद्दर्शयति तावच्च दक्षिणाग्रैरित्यादि—

वेदिका अग्निप्रणयनभूमिः—सा जीवत्यग्निहोत्रे तु उत्तराग्रैः कुशैरास्तीर्य्यते तस्मिंश्च मृतेऽग्निहोत्रे दक्षिणाग्रैः कुशैरास्तरणीया।

तथा जीवदग्निहोत्रिणि यस्य स्ववत्सेन धेनुर्दुह्यते मृताग्निहोत्रिणो गृहे तु तस्यैव धेनुः परकीयवत्सेन दोग्धव्या।

पश्चाद्दक्षिणाग्रकुशास्तीर्णायां वेदिकायां दक्षिण-गार्हपत्याहवनीयांस्त्रीनप्यग्नीनारोप्य हुत्वा[1] अधस्तादधोमुखीं समिधं धारयित्वा तेनैव परकीयवत्सकृतदोहनिष्पन्नेन गोःक्षीरेणाग्निहोत्रं जुहुयात्।

ईदृशञ्चाग्निहोत्रहोमं यावद्भिर्दिनैः शरीरमानेतुं शक्यते तावन्ति दिनानि कुर्य्यात्।

आनीते शरीरे यज्ञपात्राणि विप्राय देयानि ततो यज्ञसम्बन्धिनीं दृषदं शिलां लोष्ट्रेण विलोड्य अनन्तरमग्निकुण्डात्[2] त्रयाणामग्नीनां प्रणयनमुद्धरणं कृत्वा तच्छवं दहेत्।

अत्र मृताग्निहोत्रानुष्ठाने विशेषमाह—

कात्यायनः—

प्रोषितश्चेत् प्रेयात् प्राचीनावीतिनैवान्यां दुग्ध्वा दक्षिणतोऽधिश्रयणोद्वासने। तत एव [3]गृहमधस्तात् समिधं धारयन्

(१) क घ ङ जुह्वां।
(२) क अग्निहोत्रदत्तानां।
(३) क घ ङ हवनं।

दक्षिणाग्रान् कुशान् कृत्वा पितृवत् पर्य्यस्येत्। शरीराण्याहृत्य कृष्णाजिने पुरुषविधिं विधाय ऊर्णादिभिराच्छाद्याज्येनाभिघार्य्य पूर्व्ववद्दाहः। शरीरनाशे त्रीणि षष्टिशतानि पलाशवृन्तानां कृष्णाजिने पूर्व्ववत्।

अन्यामिति अन्यवत्सेन प्रस्नावितामित्यर्थः[1]। अथवा अन्यधेनुमेव अन्यवत्सेन तद्धेनुदोहाशक्तौ व्यवस्थितविकल्पः। जीवदग्निहोत्रे उपवीतेन दोहोऽग्निवतोऽग्नेरुत्तरेऽधिश्रयणमुद्वासनञ्च। होमीयसमस्तपदार्थस्थापनञ्च।

अत्र तु विशेषः—

दोहे प्राचीनावीतमधिश्रयणमुद्वासनञ्च दक्षिणतो जुह्वामधस्तात् समिधुद्धारणञ्च पितृवत् पर्य्यस्येदिति।

पर्य्यस्येत् प्रक्षिपेत् जुहुयादित्यर्थः। पितृवत् यथा पितृभ्यः श्राद्धं दीयते तद्दक्षिणामुखेन प्राचीनावीतिना पितृतीर्थेन तथैवेत्यर्थः।

पुरुषविधिं विधायेति—स्वगृहमृतस्याग्निहोत्रिणः पुरुषस्य कृष्णाजिनस्थापने यो विधिरुक्तस्तं कृत्वेत्यर्थः।

पूर्व्ववदिति—स्वगृहमृतस्याग्निहोत्रिणो यथा दाह उक्तस्तथैवेत्यर्थः। शरीरनाशे शरीराप्राप्तौ त्रीणि षष्टिशतानि षष्ट्यधिकानि त्रीणि शतानीत्यर्थः।

वृन्तानामिति वृन्तयुक्तानां पत्राणां ग्रहणम्।

---

(१) घ - प्रस्नवितां।

आदिपुराणे—पत्नग्रहणस्य वक्ष्यमाणत्वात् पूर्व्ववदित्युक्तार्थम्।
छन्दोगपरिशिष्टं कात्यायनः—

विदेशमरणेऽस्थीनि आहृत्याभ्युच्य[1] सर्पिषा।
दाहयेदूर्णयाच्छाद्य पात्रन्यासादि पूर्व्ववत्॥
अस्थ्नामलाभे पार्णानि शकलान्युक्तयाऽऽवृता[2]।
दाहयेदस्थिसङ्ख्यानि ततः प्रभृति सूतकम्॥
महापातकसंयुक्तो दैवात् स्यादग्निमान् यदि।
पुत्रादिः पालयेदग्नीन् युक्त आदोषसंक्षयात्॥
प्रायश्चित्तन्न कुर्य्याद्यः कुर्व्वन् वा म्रियते यदि।
गृह्यं निर्वापयेच्छ्रौतमुदस्येत् सपरिच्छदम्॥
शमयेदुभयं वाऽद्भिरङ्गोऽग्निरभवद्यतः।
पात्राणि दद्यात् विप्राय दहेदप्स्वेव वा क्षिपेत्॥
अनयैवावृता नारी दग्धव्या या व्यवस्थिता।
अग्निप्रदानमन्त्रोऽस्या [3]न प्रयोज्य इति स्थितिः॥
अग्निनैव दहेद्भार्य्यां स्वतन्त्रा पतिता न चेत्।
तदुत्तरेण पात्राणि दाहयेत् पृथगन्तिके॥

पर्णं पलाशस्तद्भवानि पार्णानि शकलानि पात्राणि अस्थि-सङ्ख्या षष्ठ्यधिकं शतत्रयम्। युक्त उद्युक्तः, गृह्यं स्मार्त्ताग्निं श्रौतमाहवनीयादिकं उदस्येत् स्थानान्तरं नीत्वा त्यजेत्।

---

(१) ख ग अभ्यज्य।
(२) ख ग वृथा।
(३) क घ अनुपयोज्य।

सूर्प-चमसारणि मुषलादिकाः समस्तयज्ञसामग्रीपरिच्छदः। व्यवस्थिता अव्यभिचारिणी अव्यभिचारित्वेऽपि [1]स्वातन्त्व-पतितत्व-वर्ज्जिता। पतिशुश्रूषामग्निशुश्रूषाञ्च त्यक्त्वा अवस्थानं स्वातन्त्व्यं पतितत्वं सुवर्णस्तेयादिकारित्वम्।

दाहयेदित्यत्रैवाग्निप्राप्तेरग्निनेति पृथगभिधानं श्रौत-स्मार्त्ताग्निग्रहणार्थम्। एवकारो लौकिकाग्निव्यवच्छेदार्थः। पृथगिति यथा पुरुषस्य मुखादिषु स्रुगादिन्यासः। नैवं स्त्रियाः। अन्तिके समीपे चितायामेवेत्यर्थः।

आश्वलायनगृह्यपरिशिष्टम्—

अस्थिनाशे पलाशवृन्तानां त्रीणि षष्टिशतानि पुरुषप्रतिनिधिं कृत्वा।

अशीत्यर्द्धन्तु शिरसि ग्रीवायां दश योजयेत्।
उरसि त्रिंशतं दद्यात् विंशतिं जठरे तथा॥
बाहुभ्यां च शतं दद्यात् दद्यादङ्गुलिभिर्दश।
द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव च॥
ऊरुभ्यान्तु शतं दद्यात् त्रिंशतं जानुजङ्घयोः।
पादाङ्गुलीषु च दश एतत् प्रेतस्य लक्षणम्॥
ऊर्णासूत्रेण संवेष्ट्य यवपिष्टेन लेपयेत्।
संस्कृत्य विधिनाग्निभिरुदधारां[2] ततो हरेत्॥

---

(१) ङ स्वातन्त्व्य पतिवर्ज्जिता।
(२) क उदग्धारां।

पुरुषप्रतिनिधिं कृत्वेत्यनेन पलाशपत्रव्यतिरिक्तद्रव्येण प्रतिनिधिक्रियां दर्शयति तच्च द्रव्यं शरपत्राणीति वच्यामः।

[1]याज्ञवल्क्यः—

पुनश्चेदुपलभ्येरंस्तदस्थीनि कदाचन।
तदभावे पलाशस्य सम्भवे हि पुनः क्रिया॥

हि यस्मात्तदभावेऽस्थ्नामप्राप्तौ पलाशस्य दाहक्रिया। पुनरस्थिसम्भवे पुनरस्थिदाहक्रिया विहिता तस्माद्यदि पुनरस्थीनि प्राप्यन्ते तदा पुनर्दाहः कर्त्तव्य इत्यर्थः।

आदिपुराणे—

आहिताग्न्योश्च दम्पत्योर्यस्त्वादौ म्रियते भुवि।
तस्य देहः सपिण्डैश्च दग्धव्य स्त्रिभिरग्निभिः॥
पश्चान्मृतस्य [2]देहस्तु दग्धव्यो लौकिकाग्निना।
अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः॥
तदलाभात् पलाशोत्थैः पत्रैः कार्य्यः पुमानपि।
शतैस्त्रिभिस्तथा षष्ट्या शरपत्रैर्विधानतः॥
वेष्टितव्यस्तथा यत्नात् कृष्णसारस्य चर्म्मणा।
ऊर्णासूत्रेण बद्धा तु (वा) प्रलेप्तव्यस्तथा यवैः॥
सुपिष्टैर्जुष[3]संमिश्रैर्दग्धव्यश्च तथाग्निना॥

---

(१) क घ ङ पुस्तकद्वये यज्ञपार्श्वः।
(२) घ दाहस्तु कर्त्तव्यः।
(३) घ जल-।

असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स्वबान्धवैः ।
एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥

तथा,—

एवं कृते मृतभ्रान्त्या यद्यागच्छेत् पुमान् क्वचित् ।
कुर्य्यादथायुषीमिष्टिं[1] पुनराधाय पावकम् ॥
अथ पर्णनरे दग्धे पात्रन्यासे कृते सति ।
गतेष्वग्निषु तद्देहाद्यद्यूर्द्धं लभते क्वचित् ॥
तदर्द्धदग्धकाष्ठानि तानि निर्मथ्य तन्दहेत् ।
यद्यर्द्धदग्धकाष्ठन्तु तदीयञ्च न लभ्यते ॥
तदा तदस्थिखण्डन्तु निक्षेप्तव्यं महाजले ।
दरिद्रोऽपि न दग्धव्यो नग्नः कस्याञ्चिदापदि ॥
केनापि वस्त्रखण्डेन छादितव्यः प्रयत्नतः ।
यत्र तत्र भवेद्दुःखी यदि नग्नस्तु दह्यते ॥
निःशेषस्तु न दग्धव्यः शेषं किञ्चित्त्यजेत्ततः ।
गच्छेत् प्रदक्षिणाः सप्त समिद्भिः सप्तभिः सह ॥
देयाः प्रहाराः सप्तैव कुठारेणोल्मुकोपरि ।
क्रव्यादाय नमस्तुभ्यमिति जप्यं समाहितैः ।
नावेक्षितव्यः क्रव्यादो गन्तव्या च ततो नदी ॥

आहिताग्न्योर्दम्पत्योर्मध्ये यदि पुमानग्रे म्रियते तदाऽसावग्नित्रयेण दग्धव्यः । पश्चान्मृता भार्य्या लौकिकाग्नौ दग्धव्या ।

---

(१) क आयुष्मतीम् ।

यदि तु भार्य्याऽग्रे म्रियते तदाऽसावग्निचयेण दग्धव्या। ततो यद्यकृते पुनराधाने पुमान् म्रियते तदा लौकिकाग्निनैव दग्धव्यः पुनराधाने कृतेऽग्नित्रयेणैव।

अनाहिताग्निः केवलस्मार्त्ताग्नियुक्तः। शरपत्रविधानत इत्यनेन शरपत्रैः पुत्तलकं कृत्वा आश्वलायनगृह्यपरिशिष्टोक्तविधानात् पलाशपत्राणि शिरःप्रभृतिषु देयानीति दर्शयति।

पलाशपत्रकृतदाहेन च त्रिरात्रमशौचम्।

एवञ्च ततः प्रभृति सूतकमिति छन्दोगपरिशिष्टमपि त्रिरात्राशौचपरमेव।

निःशेषस्तु न दग्धव्य इत्यनेन किञ्चिदवशिष्टे शवदाहेऽवशिष्टं शरीरशेषं ज्वलद्दारुमध्ये निक्षिप्य वर्द्धक्यादिकृताङ्गारदाहन्यायेन[१] मृद्भिराच्छाद्यागन्तव्यमिति दर्शयति।

प्रदक्षिणाः सप्त पद्धतीर्गच्छेदिति पूरयित्वा व्याख्येयम्। सप्तपदानीति यावत्। सप्तभिः समिद्भिरिति लिखिष्यमाणप्रचेतोवचनदर्शनात् प्रादेशपरिमाणाभिरिति बोद्धव्यम्।

आसाञ्च समिधां विनियोगः प्रचेतोवचन एव वक्ष्यते। प्रदक्षिणञ्च सप्तपदानि गत्वा तृणकाष्ठादि ज्वलदुल्मुकोपरि कुठारेण सप्त प्रहारा देयाः क्रव्यादाय नमस्तुभ्यमिति मन्त्रेण।

सप्तवारानेव च मन्त्रोच्चारणं, ज्वलच्चुल्लिकास्थितश्चाग्निश्चितास्थश्च क्रव्यादोऽतस्तमपश्यद्भिः स्नानार्थं नदी गन्तव्या।

---

(१) घ -न्यासेन।

प्रचेताः,—

नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत्।

तथा,—

दग्ध्वा शवन्ततस्त्वेवं प्रादेशाः काष्ठिकास्तथा।
सप्त प्रदक्षिणाः कृत्वा एकैकान्तु विनिक्षिपेत्॥

किञ्चिद्देयं परित्यजेदित्यनेन शवसम्बन्धि किञ्चिद्वस्त्रमेकदेशं वा श्मशानवासिचाण्डालाद्यर्थं त्यजेदिति दर्शयति। दाहानन्तरं स्नानादिकर्म्म।

---

## अथोदकादिदानम्।

छन्दोगपरिशिष्टं कात्यायनः—

अथानवेक्ष्यमेत्याप: सर्व्वे एव शवस्पृशः।
स्नात्वा सचेलमाचम्य दद्युरस्योदकं जले॥
गोत्रनामानुवादादि तर्पयामीति चोत्तरम्।
दक्षिणाग्रान् कुशान् कृत्वा सतिलांस्तु पृथक् पृथक्[१]॥

अनवेक्ष्यं चिताग्न्यवेक्षणम् यथा न भवति तथा अप एत्य गत्वेत्यर्थः। आदिशब्देन प्रेतपदोच्चारणं दर्शयति। तर्पयामीत्यनेन गोत्रादिपदानां द्वितीयान्तत्वं दर्शयति। उत्तरमित्यनेन तर्पयामिपदातिरिक्तं किञ्चिन्न वाच्यमिति दर्शयति।

---

(१) क, ग पुस्तके सकृत्।

तेनामुकगोत्रं प्रेतममुकशर्म्माणं तर्पयामीति छन्दोगानां प्रयोगः। सकृदित्यनेन एकवारमवश्यं देयं त्रिर्दाने तु फलातिरेक इति दर्शयति।

आश्वलायनः,—

सव्यावृतो व्रजन्त्यनवेक्षमाणा यत्रोदकमवहं भवति तत् प्राप्य सकृदुन्मज्य एकाञ्जलिमुत्सृज्य तस्य नामगोत्रे गृहीत्वा उत्तीर्य्यान्यानि वासांसि परिधाय सकृदेवानापीड्योदक्दशानि विसृज्यासते।

सव्यमावर्त्तन्ते इति सव्यावृतः सर्व्व एव शवस्पृशः। यत्रोदकमवहमित्यनेन नद्या यत्र देशे स्रोतो नास्ति तत्र स्नानं कर्त्तव्यमिति दर्शयति।

उन्मज्येत्यनेन सामर्थ्यात्सकृन्निमज्येति दर्शयति नामगोत्रे गृहीत्वेति जलाञ्जलिमुत्सृज्येत्यनेन सम्बध्यते।

अन्यानि परिधायेत्यनेन स्नानवस्त्राणि त्यक्तव्यानीति दर्शितं तत्र विशेषमाह।

आ समन्तात्कारेण पीड़नमकृत्वा किन्तु सकृदेव पीड़नं कृत्वा उदक्दशानि स्नानवस्त्राणि परित्यज्य उपवेशनं कुर्व्वीरन्निति। यस्तु रोगातुरत्वात् स्नानासमर्थः सः—

आतुरे स्नानसम्प्राप्ते[1] दशकृत्वस्त्वनातुरः।
स्नात्वा स्नात्वा स्पृशेत् क्षिप्रं ततः शुध्येत् स आतुरः॥

---

(१) घ स्नानमापन्ने।

इति यमवचनात् पुरुषान्तरं दशवारान् स्नापयित्वा दशवारानेवात्मनः स्पर्शं कारयेत्।

पैठीनसिः,—

स्मृतं मनसा ध्यायन् दक्षिणामुखस्त्रीनुदकाञ्जलीन् [1]निक्षिपेत्। शावप्रभृत्येकादशाहे विरमेत्।

शङ्खलिखितौ—

प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य्य नोद्वर्षयेरन्। अपः प्रसिञ्चेरन् सकृत् प्रदक्षिणाभिमुखाः। राजन्यवैश्यावप्यपसव्यं वासोयज्ञोपवीते कृत्वा असावेतत्ते इति।

नोद्वर्षयेरन्नित्यनेनास्मिन् स्नाने मलापकर्षणं न कर्त्तव्यमिति दर्शयति।

अपसव्यं वासोयज्ञोपवीते कृत्वेत्यनेन क्षत्रियवैश्ययोरुत्तरीयवासो दर्शयति। ब्राह्मणानामेकवस्त्रत्वस्य पारस्करेणोक्तत्वात्। असावेतत्ते इति सम्बोधनेन प्रेततर्पणं दर्शयति। एतच्च यजुर्वेदिनां पारस्करदर्शनात्।

आदिपुराणे,—

आदौ वस्त्रञ्च प्रक्षाल्य तेनैवाच्छादितैस्ततः।
कर्त्तव्यन्तु सचेलन्तु स्नानं सर्व्वमलापहम्॥
ततः पाषाणपृष्ठे तु सर्व्वैर्देयं तिलोदकम्।
एकैकेन देयास्तु विप्रायाञ्जलयो दश॥

---

(१) घ निनयेत्।

राज्ञे द्वादश देयास्तु वैश्याय दश पञ्च च।
त्रिंशच्छूद्राय देयास्तु प्रेतभूमिगताय च॥
अपसव्यं क्वचित् कृत्वा वस्त्रयज्ञोपवीतके।
दक्षिणाभिमुखैर्विप्रैर्दद्यन्तस्याञ्जलित्रयम्॥
वामाङ्गुष्ठप्रवाहेण भूमावेवाथवा क्वचित्।
अमुकामुकगोत्रस्तु प्रेतस्तृप्यत्विदं पठन्॥

तेनैवाच्छादितैरपि तेनैव प्रक्षालितवस्त्रेणाच्छादितैः स्नानकर्तृभिरित्यर्थः।

एवञ्च गात्रस्थं वस्त्रं प्रक्षाल्य तदेव परिधाय स्नातव्यम्। सचेलमित्यनेन यावच्चेलं देहे विद्यते तावत् प्रक्षालितव्यमिति विवक्षितम्। न तु यावच्चेलयुक्तेनैव स्नातव्यम् एकवस्त्रस्नानस्य वक्ष्यमाणत्वात्, सर्व्वमलापहमिति सपिण्डादिमरणजन्यसर्व्वपापापहमित्यर्थः।

क्वचिद्देशविशेषे एकेन पुरुषेण विप्राय दश जलाञ्जलयो देयाः। क्षत्रियाय द्वादश वैश्याय पञ्चदश शूद्राय त्रिंशत्।

पाषाणपृष्ठे ह्युदकदानं देशविशेषधर्म्म एव। वामाङ्गुष्ठप्रवाहेणेति—वामहस्तपितृतीर्थेन पितृतर्पणमृग्वेदिनां आश्वलायनगृह्ये वामहस्तेनार्घ्यदानदर्शनात्। इति देशविशेषव्यवस्थितमभिधाय दक्षिणामुखैरित्यादिना सर्व्वसाधारणमुक्तम्।

प्रेतस्तृप्यत्विति च प्रयोगः शाखिभेदव्यवस्थितः।

प्रचेताः,—

दक्षिणाभिमुखा ब्राह्मणस्य उदङ्मुखाः प्राङ्मुखा वा राजन्यवैश्ययोस्त्रिः प्रत्येकं कुर्य्युः प्रेतस्तृप्यत्विति ।

बौधायनः,—

मरणे यथाबालं पुरस्कृत्य यज्ञोपवीतान्यपसव्यानि कृत्वा तीर्थमवतीर्य्य सकृन्निमज्योन्मज्य तत् प्रेतार्थमुदकमुत्सृज्य अतएवोत्तीर्य्याचामन्ति ।

यथाबालं पुरस्कृत्येत्यस्य उत्तीर्य्येत्यनेन सम्बन्धः। यथा—वृद्धमवतरणस्योक्तत्वात् । अपसव्यान्यपसव्यानीत्यर्थः। अतएवेति अस्मादेवोदकादुत्तीर्य्येत्यर्थः ।

हारीतः—

असौ तृप्यतामिति उदकाञ्जलिं [1]नियमयति ।

एवञ्चासम्बन्धि[2]प्रथमाप्रयोगे तृप्यतु तृप्यतां-पदयोर्विकल्पः ।

पारस्करः—

संप्रयुक्तं मैथुनं याचेरन्नुदकं करिष्यामीति कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते। कुरुध्वमेवेतरस्मिन् सर्व्वज्ञातयो भावयन्ति आसप्तमात् पुरुषाद्दशमाद्वा समानग्रामवासे यावत् सम्बन्धमनुस्मरेयुरेकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकया अप आलोड्य अपनः शोशुचदघमिति दक्षिणाभिमुखा निमज्जन्ति प्रेतायोदकं सकृदासिञ्चति असावेतत्त इति ।

मिथुनं स्त्रीपुरुषयुग्मं तत्सम्बन्धि मैथुनं श्यालकादिकं

---

(१) ङ घ निनयन्ति ।

(२) घ असम्बुद्धि ।

संप्रयुक्तं सम्यक्प्रयोगकुशलं उत्तरदानाभिज्ञमिति यावत्। याचेरन् प्रार्थयेरन्नित्यर्थः।

किं याचेरन् उदकं करिष्याम इत्यर्थः। ततः कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते कुरुध्वमेवेतरस्मिन्निति प्रार्थितेन श्यालकादिना अभिहिते सर्व्वे ज्ञातयः स्नानादिक्रियां भावयन्ति।

सप्तमपुरुषपर्य्यन्तसपिण्डेषु भिन्नग्रामवासिष्वपि[1]। यस्य तु पितृ-पितामह-प्रपितामहास्त्रयः पुरुषा जीवन्ति स दशमपुरुषपर्य्यन्तम्। दशमपुरुषादूर्द्धमपि यद्येकग्रामनिवासिनो भवन्ति एककुलजाता वयमिति स्मरणञ्च भवति तदापीयं स्नानादिक्रियाकर्त्तव्येति।

यथा स्नानं कर्त्तव्यन्तदाह—एकवस्त्रा इत्यादिना अपनः शोशुचदघमित्यनेन मन्त्रेण वामहस्तानामिकया जलमालोड्यैकवस्त्रैर्दक्षिणामुखैः स्नानं कर्त्तव्यम्।

असावेतत्त इत्यनेनामुकगोत्र प्रेत अमुकदेवशर्म्मन्नेतत्ते तिलोदकं तृप्यस्वेति यजुर्वेदिनां प्रयोगो दर्शितः।

शङ्खलिखितौ,—

उदकक्रिया कामं श्वशुरमातुलयोः शिष्ये सहाध्यायिनि राजनि च।

काममित्यभिधानात् पुत्रादिसद्भावे नावश्यमियमुदकक्रिया यदि तु स्वेच्छया क्रियते तदा तेषामुपकारातिशयः स्वीयश्चाभ्युदय इति दर्शयति।

---

(१) ख अभिन्नग्रामवासिष्वपि।

याज्ञवल्क्यः—

सप्तमाद्दशमाद्वाऽधो ज्ञातयोऽभ्युपयन्त्यपः ।

अपनः शोशुचदघमनेन पितृदिङ्मुखाः ॥

एतन्मातामहाचार्य्यप्रत्तानाञ्चोदकक्रिया ।

कामोदकं सखि-प्रत्ता-स्वस्रीयश्वशुरर्त्विजाम् ॥

सकृत् प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ।

सप्तमदिवसादधः प्रथमद्वितीयसप्तमदिने मिलिता ज्ञातयोऽभ्युपयन्ति स्नानं कुर्य्युरित्यर्थः ।

तच्च स्नानं अपन इति मन्त्रेण दक्षिणाभिमुखाः कुर्य्युः । दशमादधो नवमदिने प्रथम तृतीय सप्तमनवमेष्विति गोतमस्मरणात् । वाकारश्च प्रथमतृतीयसप्तमेष्ववश्यं ज्ञातिभिर्मिलित्वा स्नातव्यम् ।

नवमे तु प्रेतोपकारातिशय इति दर्शयति । उदकक्रिया उदकेन क्रिया स्नानं तर्पणञ्च ।

कामोदकदाने पुनः प्रत्ताग्रहणं कृतपाणिग्रहणप्रत्तार्थम् । प्रथमं प्रत्ताग्रहणं वाग्दानोत्तरकालं यावत् पाणिग्रहणं न क्रियते तत्पर्य्यन्तं सकृत् प्रसेकस्त्ववश्यकर्त्तव्यतार्थः । त्रिःसेके तूपकारातिरेकात् फलातिरेकः ।

---

## अथ शोकापनोदनम्।

याज्ञवल्क्यः—

क्षतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान्।
स्नातानपनुदेयु[१]स्तानितिहासैः पुरातनैः॥
मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम्।
करोति यः स सम्मूढ़ो जलबुद्बुदसन्निभे॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च।
फेणप्रख्यः कथं नाशं मर्त्यलोको न यास्यति॥
पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः।
कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिवेदना॥
[२]सर्व्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगाश्च वियोगान्ता मरणान्तं हि जीवितम्॥
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
अतो न रोदितव्यञ्च क्रिया कार्य्या [३]विधानतः॥

श्रीरामायणे—

शोचमानास्तु सस्नेहा बान्धवाः सुहृदस्तथा।
पातयन्ति गतं स्वर्गमश्रुपातेन राघव॥

---

(१) ख ग अपवदेयुः।
(२) ख पुस्तके सर्व्वे इत्यादि श्लोकः पतितः।
(३) क हि यत्नतः।

श्रूयते हि नरव्याघ्र पुरा परमधार्म्मिकः।
[1]भूरिद्युम्नो गतः स्वर्गं राजा पुख्येन कर्म्मणा॥
स पुनर्बन्धुवर्गस्य शोकवाष्पेण राघव।
कृत्स्ने वै क्षयिते धर्म्मे पुनः स्वर्गान्निपातितः॥
अतिशोकाग्निना दग्धः पिता ते स्वर्गतश्च्युतः।
शपेत्त्वां मन्युनाविष्टस्तस्मादुत्तिष्ठ मा शुचः॥

तथा—

संयोगोऽभिमतो येषां वियोगः कथमप्रियः।
संयोगो हि वियोगेन ग्रस्त एवाभिजायते॥

महाभारते—

यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ।
समेत्य च व्यपेयातां तद्वत् भूतसमागमः॥

[2]विष्णुः—

आक्रम्य सर्व्वं कालेन परलोकाय नीयते।
कर्म्मपथ्यदनो [3]जन्तुस्तत्र का परिवेदना॥

कर्म्मपथ्यदन इति कर्म्म सुकृत दुष्कृतरूपं पथि परलोकगमनवर्त्मनि अदनं भक्षणं यस्य सम्बलमिति यावत् स कर्म्मपथ्यदनः। एतच्च सर्व्वमवश्यं श्रोतव्यम्। ऋषिभिर्नियमेन विहितत्वात्।

(१) क ङ घ भूमिद्युम्नः।
(२) घ पुस्तके विष्णुपदं नास्ति।
(३) क ख पुस्तकद्वये यस्तु तत्र।

## अथ प्रवेशनादि।

याज्ञवल्क्यः—

इति सञ्चिन्त्य गच्छेयु गृहं बालपुरःसराः।
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः॥
आचम्याथाग्निमुदकं गोमयं गौरसर्षपान्।
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः॥
प्रवेशनादिकं कर्म्म प्रेतसंसर्गिणामपि[1]।

इति शब्देन पूर्व्वोक्तं शोकापनोदनं परामृश्यते। गृहद्वारि पादप्रक्षालणं कृत्वा निम्बपत्रत्रयं दन्तैः खण्डयित्वा आचमनं कार्य्यं ततो लिखिष्यमाणमन्त्रैरग्न्यादिस्पर्शः कार्य्यः। पाषाणेऽपि लिखिष्यमाणमन्त्रेणैव पादन्यासः कार्य्यः।

एतच्च निम्बपत्रखण्डनादि कर्म्मासपिण्डैरपि कुलान्तरजातैः प्रेतस्पर्शे सति कार्य्यम्।

शङ्ख लिखितौ—

उत्तीर्य्य प्रेतस्पृष्टानि वासांस्युत्सृज्येतराणि परिधाय गृहद्वारे तस्मै प्रेताय पिण्डं दत्वा पश्चात् दूर्व्वाप्रवालान् गोमयमग्निं [2]जलं वृषभञ्चालभ्य प्रविशन्तो घृत गौरसर्षपैर्मूर्द्धानमङ्गानि चालभेरन्।

शस्त्रपाणयो यथोक्तकालनियमाः प्रेतायावश्यकान्युभयकालं

---

(१) ख ङ संस्सर्गिनामपि।

(२) ख सजं।

कुर्य्युः। भूमौ माल्यं पिण्डं पानीयं उपलेपनानि वा दद्युः। तत्कालमनध्यायो गोत्रतः पर्य्युपासनञ्च।

गोत्रतः पर्य्युपासनमित्यनेन सन्निहितैः सपिण्डादिभिः [1]परिवृत्य स्नातव्यमिति दर्शयति।

वैजवापः—

शमीमालभन्ते शमी पापं शमयत्विति अश्मानमामभन्तेऽश्मेव स्थिरो भूयासं अग्निर्नः शर्म्म यच्छत्विति। छागित्यन्तरा गामजञ्चोपस्पृशन्तः क्रीत्वा लब्ध्वा वा गृहं प्राप्य एकान्नमलवणमेकां रात्रिं भुञ्जीरन् त्रिरात्रञ्च कर्म्मोपरमणम्।

अन्तरा गामजञ्चेति—वृषभ छागयोर्मध्ये स्थित्वा छागिति मन्त्रेण द्वावपि संस्पृष्टव्यौ। गृहं प्राप्य यद्युपवासः कर्त्तुं न शक्यते। तदा क्रीत्वा लब्ध्वा वा अलवणमेकवारं दिवान्नं भोक्तव्यम्। त्रिरात्रं कर्म्मोपरमणमिति अङ्गसम्बाहन-तैलाभ्यङ्ग-मार्ज्जनादिकर्म्मत्यागो दिनत्रयम्।

पारस्करः—

प्रेतसंस्पर्शिनो ग्रामं न प्रविशेयुः—आनक्षत्रदर्शनाद्रात्रौ चेत्तदादित्यस्य।

आदित्यस्यादित्यदर्शनादित्यर्थः।

हारीतः—

न प्रेतस्पर्शिनो ग्रामं प्रविशेयुरानक्षत्रदर्शनात् रात्रौ चेदादित्यस्य ब्राह्मणानु[2]मताद्वेति।

---

(१) घ वेष्टयित्वा। (२) ख -मतौ वा।

यदि नक्षत्रादित्योदयकालप्रतीक्षणे कार्य्यविरोधो भवति तदा ब्राह्मणानुमतिं गृहीत्वा प्रवेष्टव्यमिति दर्शयति।

विष्णुपुराणे,—

प्रविष्टाश्च समं गोभिर्ग्रामं नक्षत्रदर्शने।
कटकर्म्म ततः कुर्य्युर्भूमौ स्रस्तरशायिनः॥

कटकर्म्म शवसम्बन्धि कर्म्म प्रवेशकाले गृहद्वारि अग्निस्पर्शादिकं कुर्य्युरित्यर्थः। भूमौ स्रस्तरशायिनो भवेयुरिति वाक्यशेषः। भूमावित्यनेन पीठखट्टाद्युपरि स्रस्तरारोपणं न कार्य्यमिति दर्शयति। बहुवचनं सर्व्वसपिण्डानामेवायं धर्म्म इति दर्शयति।

आश्वलायनः—

ज्येष्ठपुरःसराः कनिष्ठजघन्या निःसृत्य कनिष्ठपुरःसराः ज्येष्ठजघन्याः प्रविशेयुः। प्राप्य सद अश्मानमग्निं गोमयमक्षतं तैलं माषमप उपस्पृशन्ति नैतस्यां रात्रयामन्नं पचेयुः त्रिरात्रमक्षारलवणाशनाः स्युर्द्वादशरात्रं वा महागुरुषु।

सदो गृहम्। एतस्यां रात्रयामन्नं न पचेयुरित्यनेनान्नपाकनिषेधादेवोपवासः सूचितः। उपवासाशक्तौ त्वसपिण्डगृहात् पक्वान्नं लब्ध्वा भोक्तव्यम्। शक्तुलाजादि वा क्रीत्वा भक्षणीयम्।

द्वादशरात्रं वेति वा शब्दो व्यवस्थितविकल्पार्थः। मातरि पितरि च द्वादशरात्रमक्षारलवणान्नाशनं सपिण्डान्तरे त्रिरात्रम्।

बौधायनः,—

अक्षारलवणाशिनो दशाहं कटमुपासीरन्।

मातापित्रोरेव मरणेऽशक्तस्यापि दशाहमक्षारलवणाशन-मावश्यकम्। कटं शवं शवधर्म्ममुपासीरन्नित्यर्थः।

वशिष्ठः,—

अधस्स्रस्तरे त्र्यहमनश्नन्त आसीरन् क्रीतोत्पन्नेन (वा) वर्त्तेरन्।

सपिण्डमरणे दिनत्रयमस्पृश्यत्वात् पापमुत्पद्यते इति दर्शि-तम्। एवंविधे च पापे पीठादिषु नोपवेष्टव्यं किन्तु स्रस्तरे तेनाघसम्बन्धेनाभिधानात् अधस्स्रस्तरे इत्युच्यते तत्र दिनत्रय-मुपवेष्टव्यं शयितव्यञ्च त्र्यहमनश्नन्त इत्यनेनैतद्दर्शितम्।

यद्दिनत्रयं पापातिशयात् स्वीयमन्नमप्यशुचि न भक्षणमर्हति तेन त्रिरात्रोपवासशक्ताः सपिण्डा दिनत्रयं न भुञ्जीरन्। अशक्तास्ते क्रीत्वा लब्ध्वा वा अन्नं भुञ्जीरन् न तु पूर्व्वावस्थितं तण्डुलादिकम्।

मनुः,—

अक्षारलवणान्नाः स्यु र्निमज्जेयुश्च ते त्र्यहम्।
मांसाशनञ्च नाश्नीयुः शयीरंश्च पृथक् क्षितौ॥

क्षारलवणं सैन्धवसाम्भरिव्यतिरिक्तम्। निमज्जेयुश्च ते त्र्यह-मिति तृतीय सप्तम-नवमदिवसेषु मिलित्वा स्नानं कर्त्तव्यम्।

प्रथम-सप्तम-नवम दिवसेषूदकक्रिया।

इति गोतमदर्शनात्।

प्रथमदिनेऽत्यन्तप्रसिद्धत्वान्मनुना स्नानं नोक्तम्।

मांसाशनञ्च नाश्नीयुरिति सर्व्वे सपिण्डा यावदशौचं तावन्मत्स्यमांसादिकं न भक्षयेयुः।

मांसं न भक्षयेयुराप्रदानादिति गोतमवचनात्।
अशौचान्तश्राद्धे च मांसदानं विहितं शयीरंश्च पृथगिति न स्त्रिया नापि पुरुषान्तरेण सह एकशय्यायां शयितव्यम्।

क्षिताविति पीठखट्टादिषु शयनोपवेशननिषेधः।

बृहस्पतिः,—

अधःशय्यासना दीना मलिना भोगवर्ज्जिताः।
अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा॥

दीना इति दिनत्रयमपि न भोक्तव्यं येन कृशदेहत्वं भवति। मलिना इति दिनत्रयं गात्रेभ्यो मलोत्सारणं न कर्त्तव्यम्। भोगवर्ज्जिता इति नृत्यदर्शन-गीतश्रवण-सुगन्धितैलाद्युपभोगादिकं न कर्त्तव्यम्।

अङ्गिराः,—

ब्रह्मचर्य्यं क्षितौ वासो वर्ज्जंर मांसाशनञ्च तैः।

तैरिति सर्व्वैः सपिण्डैर्बहुवचननिर्द्देशात् ब्रह्मचर्य्यमिति मैथुनं न कर्त्तव्यमिति।

हारीतः—

कार्ष्णायसपाणयोऽधःशायिनोऽध उपवेशिन एकं पिण्डमुदकाञ्जलिञ्च निरस्य पाणिषु मृण्मयेषु पत्रपुटेषु वाऽश्नीरन्।

कार्ष्णायसं छुरिका-दात्र-कट्टारिकादि लौहद्रव्यं तद्दिनत्रयं हस्ते स्थापयितव्यम्।

पाणिष्विति प्रतिग्रासमेवान्यहस्तेन दत्तमेव भोक्तव्यं पर्ण-पुटेष्विति दोला[1]पुत्तलिकादिषु। एतेनास्तु तावत् तैजसभाजनं कदलीपत्रादिष्वपि भोजनं नास्तीति दर्शयति। अङ्गाशौच-पर्य्यन्तमेतत्।

विष्णुपुराणे,—

शय्यासनोपभोगश्च सपिण्डानामपीष्यते।
[2]अस्थिसञ्चयनादूर्द्धं संयोगो न तु योषिताम्॥

तथा,—

दातव्योऽनुदिनं पिण्डः प्रेताय भुवि पार्थिव।
दिवा च भक्तं भोक्तव्यममांसं मनुजर्षभ।
दिनानि तानि चेच्छातः कर्त्तव्यं विप्रभोजनम्॥

यावदशौचं मैथुननिषेधात् सन्नियोगशिष्टत्वादामिषवर्ज्जन[3]-मपि यावदशौचमेव प्रतीयते।

दिवा च अमांसं भोक्तव्यमिति चकारेण व्यक्तमेवानुदिनं यावदशौचममांसभक्षणमित्युक्तम्। यावदशौचमेव रात्रौ न भोक्तव्यं दिनानि तानीत्यत्यन्तसंयोगे द्वितीयया यावदचौच-व्यापित्वं प्रतीयते।

यावदशौचमेव शक्तेन [4]ब्राह्मणभोजनदानं कर्त्तव्यम्।

---

(१) ग पत्तलिकादिषु।
(२) ग भष्मास्थिचयनात्।
(३) ग घ आमिषाभक्षणं।
(४) ग विप्रे।

इच्छातो विप्रभोजनमिति यदि प्रेतोपकारेच्छा भवति तदा विप्रभोजनं कर्त्तव्यं, अकरणे प्रत्यवायाभावः।

विप्रभोजनं विशेषयति मरीचिः—

प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा।
ज्ञातिभिः सह भोक्तव्य मेतत् प्रेतेषु दुर्लभम्॥

अनेन विप्रभोजनं ज्ञातिभोजनमिति विशेषितम्। प्रेतेषु दुर्लभमित्यनेनात्यन्तप्रेतोपकार इति प्रदर्शितम्। अयञ्च प्रथम-तृतीय-सप्तम-नवमेषु ज्ञातिभोजनोपदेशो यावदशौचं ज्ञातिभोजनदानाशक्तविषयः।

मार्कण्डेयपुराणे,—

तैलाभ्यङ्गो बान्धवानामङ्गसम्वाहनञ्च यत्।
तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः॥

तैलाभ्यङ्गाङ्गसम्वाहनं बान्धवानां चतुर्थदिवसात् प्रभृति।

आदिपुराणे,—

अशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान्।

महाभारते,—

तिलान् ददत पानीयं दीपान् ददत [1]जाग्रत।
ज्ञातिभिः सह मोदद्ध्वमेतत् प्रेतेषु दुर्लभम्॥

तिलपानीयदीपानां दानं पिण्डे कर्त्तव्यम्। जागरणञ्च यावदशौचम्।

---

(१) ख. जाग्रत।

# अथ सपिण्डोदकादिदानम्।

याज्ञवल्क्यः,—

पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम्।
जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृन्मये॥

मृताहात् प्रभृति दिनत्रयं यावत् अवश्यं देयमन्नं पूरकपिण्डरूपं न तु दिनत्रयमेवेत्यवधारणं विवक्षितं विष्णादिवचनेषु दशाहं पूरकपिण्डदानविधानात्। तेनास्पृश्यत्वयोगिदिनत्रयेऽपि पूरकपिण्डदानादरार्थञ्च[1] दिनत्रयग्रहणम्।

पिण्डयज्ञावृता पिण्डपितृयज्ञेतिकर्त्तव्यतया, एतेन रेखाकरणं दर्भास्तरणं प्राचीनावीतित्वं दक्षिणाभिमुखत्वं वामजानुपातनमवनेजनदानं पिण्डोपरि पुनरवनेजनञ्च दर्शितम्।

अपहता अत्र पितरो अमीमदन्त ऊर्ज्जं वहन्तीः—छन्दोगानाम्, नमो वः पितरः, सदो वः पितरो यजुर्व्वेदिनां षड़ञ्जलिमन्त्राः। एते सर्व्वे एव न प्रयोक्तव्याः—मन्त्रनिषेधस्य मरीचिनोक्तत्वात्।

मृन्मयपात्रे जलं कृत्वा पात्रान्तरे दुग्धं गव्यं कृत्वा आकाशे शिक्यादावेकां रात्रिं स्थापनीयम्। तत्र यदि मृताहे दिवादाहः समाप्यते तदा तस्यामेव रात्रौ स्थाप्यं नो चेदपरस्याम्।

यत्तु मत्स्यपुराणे,—

---

(१) ख -विधानार्थञ्च।

प्रेताय पिण्डदानन्तु द्वादशाहं समाचरेत्।
पाथेयन्तस्य तत् प्रोक्तं [1]यतः प्रीतिकरं महत्॥
यस्मात् प्रेतपुरं प्रेतो द्वादशाहेन नीयते।
गृहं पुत्रं कलत्रञ्च द्वादशाहं स पश्यति॥
तस्मान्निधेयमाकाशे दशरात्रं पयस्तथा।
सर्व्वपापोपशान्त्यर्थमध्वश्रमविनाशनम्॥ इति च वचनम्।

तत्र पयःशब्देन दशरात्रं क्षीरस्य[2] निधानमुक्तं साहचर्य्याज्जलस्यापि तदधिकप्रेतोपकारार्थम्।

एतदुक्तम्भवति एकरात्रमवश्यं क्षीरोदकनिधानम्, अकरणे प्रत्यवायः। दशरात्रनिधानेऽधिकप्रेतोपकारो भवति नत्वकरणे प्रत्यवायः। द्वादशपिण्डदानन्त्वेकादशाह-द्वादशाहश्राद्धाङ्गीभूतपिण्डद्वयदानेन सहेति बोद्धव्यम् स्मृत्यन्तरेण दशपिण्डदानस्य नियतत्वात्।

पिण्ड-जल-क्षीरदानेषु विशेषमाह—

पारस्करः—

प्रेताय पिण्डं दत्त्वाऽवनेजनदान-प्रत्यवनेजनेषु नामग्राहं मृन्मये तां रात्रिं क्षीरोदके विहायसि निदध्युः प्रेतात्र स्नाहीति पिब चेदं क्षीरमिति।

दानशब्देन पिण्डदानमुक्तम् बहुवचनात्, तेनावनेजनपिण्डदान पुनरवनेजनेषु नामग्राहं नाम गृहीत्वा पिण्डं दत्वा

(१) ख प्रेतप्रीति-।
(२) घ क्षीरस्याकाशे।

पिण्डानुष्ठानं समाप्य विहायसि चीरोदके निदध्युरित्यर्थः। अत्र प्रेतायेति ग्रहणं याज्ञवल्क्ये च प्रेतपदेनोद्देश्यत्वज्ञापनार्थम्।

तेनामुकगोत्र प्रेतामुकदेवशर्म्मन्नवनेनिक्ष्वेति प्रयोगः। पिण्ड-दाने तु षष्ठ्यन्तेन वक्ष्यामः।

विष्णुः,—

यावदशौचं तावत् प्रेतस्योदकं पिण्डमेकञ्च दद्युः।

उदकं तर्पणरूपं पिण्डदाने च मृन्मयपात्रे कृत्वोदकाञ्जलि-दानम्। एतच्चादिपुराणे[1] व्यक्तीभविष्यति।

अङ्गिराः,—

भूमौ पिण्डप्रदानञ्च कर्षूं कृत्वा विधानतः।
गन्धमाल्यैः समभ्यर्च्य ततो भोजनमिष्यते॥

भूमौ कर्षूं कृत्वेत्यस्य कर्षूमध्ये पिण्डदानमित्यर्थः। कर्षू-शब्देन साग्निकर्त्तव्यान्वष्टकादिकर्म्माङ्गभूतः प्रादेशदीर्घश्चतुरङ्गुल-विस्तारश्चतुरङ्गुलनिम्नः खात उच्यते। एतच्च कर्षू-विधानं केषाञ्चित् शाखिनाम्।

प्रचेताः,—

गृहद्वारे तस्मै प्रेताय पिण्डं [2]निर्व्वाप्य भूमौ माल्यं पानीयञ्चो-पलिप्तायां दद्युः।

उपलिप्तायां भूमौ माल्यं पानीयमित्यनेन पिण्डसमीपे

(१) ख ब्रह्मपुराणे।
(२) ख-घ पुस्तकद्वये निर्वपेयुः।

माल्यपानीयदानं दर्शयति पानीयञ्च मृन्मयपात्रकृतोदकाञ्जलिरूपमुक्तमेव।

पिण्डेतिकर्त्तव्यतामाह आदिपुराणे,—

प्रथमेऽहनि यो दद्यात् प्रेतायान्नं समाहितः।
यत्नान्नवसु चान्येषु स एव प्रददात्यपि॥
मृन्मयं भाण्डमादाय नवं स्नातः सुसंयतः।
लगुड़ं सर्व्वदोषघ्नं गृहीत्वा तोयमानयेत्॥
ततश्चोत्तरपूर्व्वस्यामग्निं प्रज्वालयेद्दिशि।
तण्डुलप्रसृती तत्र प्रक्षाल्य द्विः पचेत् स्वयम्॥
सपवित्रै स्तिलैर्मिश्रां केशकीटविवर्ज्जिताम्।
द्वारोपान्ते ततः क्षिप्त्वा शुद्धां वा गौरमृत्तिकाम्॥
तत्पृष्ठे प्रस्तरेद्दर्भान् याम्याग्रान् देशसम्भवान्।
ततोऽवनेजनं दद्यात् संस्मरेद् गोत्रनामनी॥
तिलसर्पिर्मधुक्षीरैः सिक्तं तन्नमेव हि।
दद्यात् प्रेताय पिण्डन्तु दक्षिणाभिमुखस्थितः॥
फल मूल-गुड़-क्षीर तिलमिश्रन्तु कुत्रचित्।
अर्घ्यैः पाद्यैस्तथा धूपैर्दीपैस्तोयैश्च शीतलैः।
ऊर्णातन्तुमयैः [1]शुक्लैर्वासोभिः पिण्डमर्च्चयेत्॥
प्रयाति यावदाकाशं पिण्डाद्वाष्पमयी शिखा।

(१) घ शुद्धैः।

तावत् तत्सम्मुखस्तिष्ठेत् सर्व्वांस्तोये क्षिपेत्ततः॥
दिवसे दिवसे पिण्डो देय एवं क्रमेण तु।
सद्यःशौचेऽपि दातव्याः सर्व्वेऽपि युगपत्तथा॥
त्र्यहाशौचे प्रदातव्यः प्रथमे त्वेक एव हि।
द्वितीयेऽहनि चत्वारः तृतीये पञ्च चैव हि॥
एकस्तोयाञ्जलिस्त्वेवं पात्रमेकञ्च दीयते।
द्वितीये द्वौ तृतीये त्रींश्चतुर्थे चतुरस्तथा॥
पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त एव च।
अष्टमेऽष्टौ च नवमे नवैव दशमे दश॥
येन स्युः पञ्चपञ्चाशत् तोयस्याञ्जलयः क्रमात्।
तोयपात्राणि तावन्ति संयुक्तानि तिलादिभिः॥
जात्युक्ताशौचतुल्यांस्तु वर्णानां क्वचिदेव हि।
देशधर्म्मान् पुरस्कृत्य प्रेतपिण्डान् वपत्यपि॥
देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि।
वैश्यानां पञ्चदशमे देयस्तु दशमस्तथा।
शूद्रस्य दशमः पिण्डो मासपूर्णेऽह्नि दीयते॥

प्रथमेऽहनि यो दद्यादिति सम्बन्धी असम्बन्धी वा पुरुषो वा स्त्री वेत्युक्तम्, अन्नं पिण्डमन्येषु नवसु स एवेत्येवकारेण प्रथमपिण्डदात्रैव दशमपिण्डदानेऽधिकारीति दर्शयति।

तेन यदा पुत्रादेरसन्निधावन्येन प्रथमपिण्डो दत्तस्तदा दशाहमध्ये पुत्रादेरागमनेऽपि दाशाहिकपिण्डदानं पुत्रादिना न

कार्य्यम् किन्तु प्रथमपिण्डदात्रा कार्य्यम्। पुत्रादिस्तु दाशाहिक-पिण्डव्यतिरिक्तं सर्व्वं कुर्य्यात्।

लगुड़ं गृहीत्वेति अग्रगामिपुरुषान्तरहस्तेन लगुड़ं गृहीत्वेत्यर्थः।

तोयार्थन्तु ततो गच्छेत् गृहीत्वा पुरुषं पुरः।
गृहीतलगुड़ं यत्नात् सर्व्वदुष्टनिवारणम्॥

इति गोविन्दराजलिखितवृद्धप्रचेतोवचनात्। तेन लगुड़हस्तं पुरुषमग्रे कृत्वा पिण्डार्थं मृन्मयभाण्डेन जलमानेतव्यम्। ततः स्वगृहवास्तुन[1] ऐशान्यान्दिश्यग्निं प्रज्वाल्य तण्डुलप्रसृतिद्वयं द्विः प्रक्षाल्य स्वयमेव तथा पाकं कुर्य्यात् यथा मण्डगालनव्यतिरेकेणान्तरुष्मपक्वं सुसिद्धमदग्धमकठिनमन्नम्भवति।

[2][ततो द्वारदेशे कुशतिलमिश्रां शुद्धां पीतां वा केशकीटशून्यां मृदं प्रक्षिप्य पिण्डिका कार्य्या। यदि त्वत्यन्तपवित्रदेशोद्भवा मृत्तिका तदा तिलकुशरहिता पिण्डिका कार्य्या] ततः पिण्डिकोपरि दक्षिणाग्रां रेखां कृत्वा रेखोपरि शुचिदेशोद्भवान् दक्षिणाग्रान् दर्भानास्तरेत्।

तत आस्तीर्णकुशोपरि गोत्रनामोच्चारणपूर्व्वकं सतिल-जलेनावनेजनदानं कुर्य्यात्। ततस्तिल-घृत-मधु-दुग्धमिश्रं पिण्डं

---

(१) क ग वास्तुनि।

(२) घ पुस्तके [ ] चिह्नितांशः पतितः।

तप्तमेव गृहीत्वा दक्षिणामुखोऽवनेजनस्थाने दद्यात् प्रेतायेति चतुर्थ्या प्रेतपदोद्देश्यत्वं[1] दर्शयति।

क्वचित्तु देशे घृतमधुस्थाने फलमूलगुड़ोपादानं क्रियते। सर्व्वत्रैव देशे पिण्डदानानन्तरमर्घ्यादिभिर्यथाशक्ति पिण्डार्च्चनं कार्य्यं, यावच्च पिण्डाद्वाष्पमुत्तिष्ठति तावत्पिण्डं[2]पश्यन्नवतिष्ठेत। सम्यग्वाष्पनिवृत्तौ सर्व्वोपकरणसहितं पिण्डं जले क्षिपेत्।

सद्यःशौचे दशपिण्डा एकदिवसे देयाः। तत्रापि दशसु पात्रेषु तण्डुलप्रसृतिद्वयं पृथगेव दशधा पक्तव्यम्।

[3]एकपात्रे तु संख्यान्तरोपजनने सति द्वित्वसंख्या वाध्येत त्र्यहाशौचे योऽयं प्रकार उक्तः स वक्ष्यमाणपारस्करोक्तप्रकारेण सह वैकल्पिकः।

एकस्तोयाञ्जलिरित्यादिना दशाहपर्य्यन्तं प्रत्यहमेकैकवृद्ध्या पृथक् पृथङ्मृन्मयपात्रे गन्ध-पुष्प-तिलयुक्तैकैकस्तोयाञ्जलिः पिण्ड-समीपे स्थापनीय इति दर्शयति।

तिलादिभिरित्यादिशब्देन गन्धपुष्पयोर्ग्रहणम्। जात्युक्ता-शौचतुल्यांस्त्वित्यादिना पारस्कराद्युक्तानां क्षत्रिय-वैश्य-शूद्र-सम्बन्धिनां द्वादश-पञ्चदश-त्रिंशत्पिण्डानां दानं देशविशेषे व्यव-स्थितमिति दर्शयति। देयस्तु दशम इत्यादि सुगमम्।

---

(१) ख प्रेतपदे निर्द्देश्यत्वं। घ -पदेन उद्देश्यतां।

(२) ग पश्यन्नेव तिष्ठेत्।

(३) घ -एकत्र पाके...वर्ध्यते।

मरीचिः,—

प्रेतपिण्डं बहिर्दद्यान्मन्त्रदर्भविवर्ज्जितम्।
प्रागुदीच्यां चरुं कृत्वा सुस्नातः सुसमाहितः॥

बहिरिति बहिर्द्वार इत्यर्थः। चरुशब्दोऽनवस्रावितमण्डान्तरूष्मपक्वविशदसिद्धौदनवाची। तेनादिपुराणे पचेदिति सामान्येन यद्यप्युक्तस्तथापि चरुं पचेदिति बोद्धव्यम्। सुस्नात इति सुशब्देन सशिरस्कस्नानं दर्शयति।

तेनाशिरस्कस्नानं जलार्द्रवाससा गात्रमार्ज्जनं कृत्वा पिण्डदानं प्रतिषिध्यते सुसमाहित इत्यनेन श्रद्धातिशयं कार्य्यान्तरानाक्षिप्तचित्तत्वञ्च दर्शयति।

विष्णुः—

प्रेतस्योदकनिर्व्वपणं कृत्वा पिण्डमेकं कुशेषु दद्युः।
मरीचिना पिण्डदानं कुशवर्ज्जितमुक्तं विष्णुना कुशेषूक्तम्।

तत्र व्यवस्थामाह हारीतः—

अकृतचूड़ा ये बाला ये च गर्भाद्विनिःसृताः।
मृता ये चाप्यसंस्कारास्तेभ्यो भूमौ प्रदीयते॥

अकृतचूड़ा इति चूड़ाकरणकालेऽपि दैववशादकृतचूड़ाकरणाः, अन्यथा गर्भाद्विनिःसृता इति पृथग्ग्रहणं न प्राप्नोति अकृतचूड़त्वेनैव ग्रहणात् गर्भाद्विनिःसृता इत्यनन्तरमेव गर्भाद्विनिःसृताः षण्मासाभ्यन्तरमृता इत्यर्थः।

असंस्कारा-उपनयनकालेऽप्यकृतोपनयनाः। अन्यथाऽकृत-

चूड़त्वेनैव संस्काराभावे सिद्धे असंस्कारा इति पुनर्ग्रहणं न प्राप्नोति। एतेषां कुशरहितायां भूमौ पिण्डदानमेतद्व्यतिरिक्तानां कुशेषु।

शुनःपुच्छः—

फलमूलैश्च पयसा शाकेन च गुड़ेन च।
तिलमिश्रन्तु दर्भेषु पिण्डं दक्षिणतो हरेत्॥
द्वारदेशे प्रदातव्यो देवतायतनेषु वा।
तूष्णीं प्रत्येकं पुष्पञ्च धूपं दीपं तथैव च॥
शालिना शक्तुभिर्व्वापि शाकैर्व्वाप्यथ निर्व्वपेत्।
प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम्॥

फल-मूल दुग्ध-शाक-गुड़ैः सहितं पिण्डमित्यर्थः। तिलमिश्रन्त्विति तु शब्दोऽवधारणेऽवश्यं तिलमिश्रितमित्यर्थः। एवञ्च फलमूलादिसहितत्वे प्रेतोपकारातिशयः, असहितत्वे प्रत्यवायाभावः। ततश्च शक्तौ यथासम्भवं व्यस्त-समस्तफलादिदानम्।

दक्षिणत इति द्वारदेशस्य दक्षिणपार्श्वमाश्रित्येत्यर्थः। देवतायतनेषु चेति प्रवासस्थस्य स्वगृहाभावे। यत्र तु स्वगृहं नास्ति देवतायतनमपि न विद्यते तत्र जलसमीपे पिण्डदानं कार्य्यम्।

प्रेतीभूतस्य सततं भुवि पिण्डं जलन्तथा।
सतिलं सकुशं दद्याद्बहिर्जलसमीपतः॥

इति मत्स्यपुराणवचनात्।

तुष्णीं प्रसेकमिति मृन्मयपात्रस्थजलाञ्जलिमित्यर्थः। शालि-नेति—पाकासामर्थ्ये शालिशब्दवाच्यहैमन्तिकधान्यसम्भवतण्डुलेन पिण्डदानं दर्शयति।

शक्तुभिर्व्वेति—तण्डुलानाञ्चाभावे। उभयोरभावे शाकैरेव केवलैः। एतेषां विशेषो यदि प्रथमदिने तण्डुलैः पिण्डो दत्तः, तदा दशपिण्डास्तण्डुलैरेव देयाः। यदि शक्तुभिः शाकैर्व्वा दत्तस्तदा तैरेव देया दशपिण्डाः।

ऋष्यशृङ्गः—

न स्वधाञ्च प्रयुञ्जीत प्रेतपिण्डे दशाहिके।
भाषेतैतच्च वै पिण्डं यत्नदत्तस्य पूरकम्।
यस्य न ज्ञायते गोत्रं पिण्डं नाम्ना तु निर्व्वपेत्॥

दशाहिकग्रहणादेकादशाहादिश्राद्धेषु स्वधाप्रयोगोऽस्तीति दर्शयति। भाषेतेत्यनेन पिण्डदाने वाक्यविशेषनियमं दर्शयति।

अमुकगोत्रस्य प्रेतस्यामुकदेवशर्म्मण एतत् पिण्डं पूरकमिति प्रयोगो भवति। गोत्राज्ञाने नाममात्रेणैव पिण्डदानम्।

शातातपः—

अशौचस्य च ह्रासेऽपि (तु) पिण्डान् दद्याद्दशैव तु।

अशौचमध्ये इत्यर्थः।

अशौचमध्ये[1] कथं पिण्डदानमित्यत आह पारस्करः,—

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसञ्चयनन्तथा॥

(१) घ -ह्रासे।

त्रींस्तु दद्यात् तृतीयेऽह्नि वस्त्रादि क्षालयेत्तथा।
एकोद्दिष्टञ्च कर्त्तव्यं श्राद्धकर्म्म ततःपरम्॥

अस्थिसञ्चयनन्तथेति समस्तचतुर्थाहकृत्योपलक्षणार्थम्। तेन द्वितीयदिवसे चतुर्थाहश्राद्धं स्मर्य्यम्। वस्त्रादि क्षालयेदिति क्षौरादिसमस्ताशौचान्तकृत्योपलक्षणार्थम्। एकोद्दिष्टमेकादशाहिकम्। ततःपरं तृतीयदिनात्परं चतुर्थेऽह्नीत्यर्थः। एवञ्चार्थात् द्वादशाहिकं पञ्चमेऽहनि प्रथमेऽहनि त्रयः पिण्डा इत्यादिरयं[1] पक्ष आदिपुराणोक्तपक्षवैकल्पिक इत्युक्तमेव।

पुनः पारस्करः—

ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्त्तिताः।
प्रेतेभ्यः सर्व्ववर्णेभ्यः पिण्डान् दद्याद्दशैव तु॥

क्षत्रियादीनां द्वादशादिपिण्डान् देशविशेषव्यवस्थापितानुपन्यस्य दशैव त्विति तु शब्देन सर्व्वदेशधर्म्मत्वं निराकरोति।

बृहत्प्रचेताः—

पिण्डः शूद्राय दातव्यो दिनान्यष्टौ नवाऽथ वा।
सम्पूर्णे तु ततो मासे पिण्डशेषं समापयेत्॥

शूद्रायेति ग्रहणात् अष्टौ नव वेतीच्छाविकल्पः शूद्राणामेव, क्षत्रिय-वैश्ययोस्तु नवभिर्दिनैर्नवपिण्डान् दत्वा दशम एव पिण्डोऽशौचान्तदिने देय इति दर्शयति।

---

(१) ष इत्यादित्रयं।

आश्वलायनगृह्यपरिशिष्टम्—

नवश्राद्धं दशाहानि नवमिश्रन्तु षड्तून्।
अतःपरं पुराणञ्च त्रिविधं श्राद्धमुच्यते॥
यस्मिन् नवे पुराणे वा विश्वे देवा न लेभिरे।
तदासुरं भवेच्छ्राद्धं वृषलं मन्त्रवर्ज्जितम्॥
अनुदकमधूपञ्च गन्धमाल्यविवर्ज्जितम्।
निनयेदश्मनि पूर्व्वं ततः श्राद्धं प्रकल्पयेत्॥
पश्चाच्च निनयेत्पिण्डं तस्मिन्नेव यथाविधि।
असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्॥
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते॥

इति यमवचने,—

"चतुर्थे पञ्चमे वाऽथ नवमैकादशे तथा"।

इत्यादिपुराणवचने च दशाहमध्ये श्राद्धत्रयं दर्शितम्। तच्छ्राद्धत्रयं नवश्राद्धं दशाहानीत्यनेनोक्तम्।

एतच्च ऋग्वेदिना कर्त्तव्यं ऋग्वेदिगृह्यपरिशिष्टेनोक्तत्वात्। एतच्च श्राद्धत्रयं साग्निना वैश्वदेवपूर्व्वकं कर्त्तव्यं पुराणश्राद्धसमभिव्याहारात्। प्रथमवर्षोपरि श्राद्धं पुराणमुक्तं ततःपरं प्रतिसंवत्सरश्राद्धमपि पुराणपदेन गृहीतम्।

तत्र च साग्नेरेव सदैवतं तच्छ्राद्धम्। अतो दशाहमध्ये श्राद्धेऽपि साग्नेरेव सदैवतं श्राद्धं मन्त्रवर्ज्जितं क्रियते तद्वृषलम्भवति

वृषस्य धर्म्मस्य अलं वाधकं भवति तस्मात् समन्त्रकश्राद्धं कर्त्तव्यम्। चतुर्थ-पञ्चम-नवम-दिनेषु प्रथमं पूरकः पिण्डो देयः ततः श्राद्धं कर्त्तव्यम्। अनुदकमिति मृन्मयपात्रस्थोदकाञ्जलि-रहितमित्यर्थः।

एतच्च तोयाञ्जलिरहितत्वं गन्धादिवर्ज्जितत्वञ्च ऋग्वेदिना-मेव। अश्मन्यपि पिण्डदानमृग्वेदिनामेव पश्चादपि श्राद्धाङ्गभूत-पिण्डदानमश्मन्येव तच्च यथाविधि गन्धादियुक्तमपीत्यर्थः।

---

## अथ प्रेताधिकारिनिरूपणम्।

ऋष्यशृङ्गः,—

पुत्रेषु विद्यमानेषु नान्यं वै कारयेत् स्वधाम्।
अपुत्रस्य च या पुत्री साऽपि पिण्डप्रदा भवेत्॥
तस्य पिण्डान् दशैतान् वा एकाह्नेनैव निर्व्वपेत्।
नद्यां समुद्रगामिन्यां तांश्च पिण्डान् विनिक्षिपेत्॥

नान्यमिति प्रतिषेधात् अपुत्रायाः पत्न्या अनूढ़ाया अपि दुहितुः पुत्रे विद्यमानेऽनधिकारः। अपुत्रस्य च या पुत्रीति व्यक्तमेव पुत्राभावे दुहित्रधिकारं दर्शयति।

यच्च,—

दुहिता पुत्रवत् कुर्य्यान्मातापित्रोस्तु संस्कृता।
अशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोः॥

इति भरद्वाजनाम्ना वचनं पठन्ति तन्नोविन्दराज-विश्वरूप-कामधेनुकारैर्न लिखितमित्यमूलमेव प्रतिभाति। समूलत्वेऽपि पुत्राभाव एव पुत्रतुल्यत्वं दर्शयति भ्रातृ-भ्रातृजप्रभृतीनाम् दुहितृसद्भावेऽनधिकारज्ञापनार्थञ्च।

संस्कृता इत्यनेन विवाहिताया विवाहेन पितृगोत्राद्बहि-र्भूताया अपि दुहितुः पितुरपुत्रत्वेऽधिकारं दर्शयति।

एवञ्चाविवाहितायाः श्राद्धकरणसमर्थायाः सुतरां सिद्ध्यति पितृगोत्रत्वादिति।

यद्यपि—

अपुत्रा स्त्री यथा पुत्रः पुत्रवत्यपि भर्त्तरि।
दद्यात् पिण्डं जलञ्चैव जलमात्रन्तु पुत्रिणी॥

इति वचनमृषिनामशून्यमेव तन्निर्मूलमेव। समूलत्वेऽपि देशान्तरस्थेऽत्यन्तबालकपुत्रेऽपुत्रपत्नीसम्भवे पुत्रिण्याः पत्न्या जल-मात्रं विधत्ते।

अपुत्रायास्तु पिण्डश्राद्धाधिकारित्वं दर्शयति—

दशैतान् वेति वाकार(१) आदिपुराणवचने वक्ष्यमाणत्रिरात्रा-पेक्षया विकल्पार्थः। व्यवस्थितविकल्पश्चायं कृतचूडाकरणाकन्या-वाग्दानपर्य्यन्तमेकाह्नेन दश पिण्डान् दद्यात्। वाग्दानादुत्तर-कालं त्रिरात्रेण। समुद्रगामिन्यामिति प्राशस्त्यातिशयार्थम्। समुद्रगामिन्यभावे नदीमात्रे, नद्यभावे जलमात्रे।

---

(१) घ वाशब्दः।

प्रचेताः—

पुत्रो भ्राता पिता वापि मातुलो गुरुरेव च।
एते पिण्डप्रदा ज्ञेयाः सगोत्राश्चैव बान्धवाः[1] ॥

भ्रातेत्यविशेषेणोपादानात् कनिष्ठभ्रातुरप्यधिकारं दर्शयति। तेनापुत्रस्य पत्नीदुहित्रभावे कनिष्ठभ्रातुरधिकारः। तदभावे पितुः।

यच्च,—

न पुत्रस्य पिता दद्यात् नानुजस्य तथाग्रजः।

इति छन्दोगपरिशिष्टं—तच्च भ्रातृसद्भावे पितुः, कनिष्ठभ्रातृसद्भावे च ज्येष्ठभ्रातुरनधिकारं दर्शयति।

पित्रभावे पितृव्यस्य सगोत्रत्वात् पितृव्याभावे पितामहस्य, पितामहस्याभावे मातुलस्य, मातुलाभावे मातामहस्य तदभावे गुरोः।

गुर्व्वभावे सगोत्राणां बान्धवानां सगोत्राश्च बान्धवाः सपिण्ड-सगोत्र समानोदकगोत्रजाः सन्निधितारतम्येनाधिकारिणः।

पुत्राभावे प्रकृते शङ्खः,—

भार्य्यापिण्डं पतिर्दद्यात् [2]भर्त्ते भार्य्या तथैव।
[3]श्वशुरादेः स्नुषा दद्यात्तदभावे द्विजोत्तमः ॥

अपुत्रायाः पत्न्याः दुहितृ-सपत्नीपुत्रयोरभावे पतिर्दद्यात्।

---

(१) क चिरबान्धवाः।
(२) ग पत्युः।
(३) ख श्वश्र्वादेश्च स्नुषा चैव।

यत्तु,—

न जायायाः पतिर्दद्यात् अपुत्राया अपि क्वचित्।

इति छन्दोगपरिशिष्टं तदुहितृ-सपत्नीपुत्रयोः सद्भावे भर्त्तृभार्य्या तथैव चेति व्याख्यातम्। अपुत्रायाः श्वश्र्वाश्च स्नुषा, श्वश्रुश्च स्नुषायाः। श्वशुरस्य तु पौत्र-प्रपौत्राभावे स्नुषा मातृपितृकुलसम्बन्धिनां व्यवहितानामप्यभावे द्विजोत्तमो ब्राह्मणो ब्राह्मणस्यासम्बन्धिनोऽपि दद्यात् न तु क्षत्रियादिरसम्बन्धी[१]।

आदिपुराणे—

न कदाचित् सगोत्राय श्राद्धं कार्य्यमगोत्रजैः।
असमाप्तव्रतस्यापि कर्त्तव्यं ब्रह्मचारिणः॥
श्राद्धन्तु मातापितृभि र्न तु तेषां करोति सः।
नित्यं गुरुकुलस्थस्य गुरुः सब्रह्मचारिणः॥
निरन्वये सपिण्डे तु मृते सति दयान्वितः।
तदशौचं पुरा चीर्त्त्वा कुर्य्यात्तत्पितृसत्क्रियाम्॥
त्रयाणामाश्रमाणाञ्च कुर्य्याद्दाशाहिकीं[२] क्रियाम्।
यतेः किञ्चिन्न कर्त्तव्यं न चान्येषां करोति सः॥
गुरुः करोति शिष्याणां पिण्डनिर्व्वपणं सदा।
कृत्वा तत्पैतृकं शौचं स्वजातिविहितञ्च यत्॥
भ्रातुर्भ्राता स्वयञ्चक्रे तद्भार्य्या चेन्न विद्यते।
तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः॥

---

(१) ग घ सम्बन्धी।

(२) क -दाहादिकाम्।

दत्तानां चाप्यदत्तानां कन्यानां कुरुते पिता।
चतुर्थेऽहनि तास्तेषां कुर्व्वीरन् सुसमाहिताः॥
मातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे।
तेऽपि तेषां प्रकुर्व्वन्ति द्वितीयेऽहनि सर्व्वदा॥
जामातुः श्वशुराश्चक्रुस्तेषान्तेऽपि च संयताः।
मित्राणां तदपत्यानां श्रोत्रियाणां [1]गुरोस्तथा॥
भागिनेयसुतानाञ्च सर्व्वेषान्त्वपरेऽहनि।
श्राद्धं कार्य्यन्तु प्रथमे स्नात्वा कृत्वा जलक्रियाम्॥
राज्ञां मृते सपिण्डे तु निरपत्ये पुरोहितः।
मन्त्री वा तदशौचन्तु [2]चीर्त्त्वा पश्चात्करोति सः॥
ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन।
कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितामियात्॥
पुत्राः कुर्व्वन्ति विप्राय चत्र-विट् शूद्रयोनयः॥
स तादृशेभ्यः पुत्रेभ्यो न करोति कथञ्चन।
स्वमाता कुरुते तेषां तेऽपि तस्याश्च कुर्व्वते॥

सपिण्डसमानोदकाय सगोत्रायान्यगोत्रजैर्द्वारभूतैर्न कारयितव्यं श्राद्धमेकादशाहादिकमन्यगोत्रजो न प्रेरयितव्यो न वा स्वयमुपेक्षा कर्त्तव्या येनान्यगोत्रजोऽदृष्टार्थं कारुण्याद्वा प्रवर्त्तेत इत्यर्थः।

---

(१) घ गुरुः।
(२) घ तीर्त्त्वा।

व्रतं तत्तद्वेदैकदेशाध्ययनाङ्ग-भूतमास-षण्मास-वर्षादिकाल-समाप्यम्। व्रतस्यस्यापीत्यपिशब्दाद्ब्रह्मचर्य्यमात्रस्थितस्य सुतरां दर्शयति। स गुरुर्य्यस्य गुरोर्गृहे तिष्ठतीत्यर्थः।

ब्रह्मचारिणः सपिण्डे मातृ-पितृ पितृव्यादौ सन्ततिशून्ये मृते प्रेतक्रिया, कर्त्रन्तराभाव इत्यर्थः। दयान्वितो गुरुर्मृतस्य ब्रह्म-चारिणस्तत्पितृसत्क्रियां कुर्य्यात्।

पितुः कर्त्तव्या सत्क्रिया पितृसत्क्रिया तस्य ब्रह्मचारिण-उद्देश्यत्वेन सम्बन्धिनी पितृकर्त्तव्या सत्क्रिया तत्पितृसत्क्रिया।

किमुक्तं भवति पितुरपि या कर्त्तव्या भवति सा पितृतुल्यस्य गुरोर्युक्तैव कर्त्तुम्। [1][ब्रह्मचारिव्यतिरिक्ता क्रियासद्भावे (?) ब्रह्म-चारिणोऽन्यक्रियाकरणे ब्रह्मचर्य्यलोपप्रसङ्गात् कर्त्तुं न युक्तम्।

अस्य च सपिण्डः प्रेतक्रियाऽकरणात् भ्रष्टो भवति। अतो-ऽहममुका वयमिति दयया युक्त इत्यर्थः।] ब्रह्मचारिसपिण्डस्य यावत्कालमशौचं स्वजातिविहितं तावत्कालमशौचमङ्गीकृत्याशौच-विहितपिण्डादिदानं समाप्य शुद्धिकालविहितैकादशाहादिश्राद्धं कुर्य्यादित्यर्थः।

नित्यं सर्व्वदा न दाशाहिकक्रियामात्रं किन्तु यदा यदा मासिकाद्येकोद्दिष्टं भवति तदा कुर्य्यादित्यर्थः।

यथा—

गुरुः करोति शिष्याणां पिण्डनिर्व्वपणं सदा।

---

(१) क ग पुस्तकद्वये [ ] चिह्नितांशोऽधिकः।

इत्यत्र सदाशब्दस्यार्थः।

न चानेन—नित्यं गुरुकुलस्यस्येत्यस्य गतार्थता, अत्र शिष्यमात्रग्रहणात् गोबलीवर्द्दन्यायेन ब्रह्मचारिव्यासग्रार्थत्वात्। अतएवास्यापि न गतार्थता वेद-वेदाङ्ग धर्म्मशास्त्रव्याख्याने यः शिष्यस्तदुपसंग्रहार्थत्वात्। स्वजातिविहितञ्च यदित्यनेन दशाहविहितपिण्डदानमुक्तम्।

भार्य्या चेन्नास्तीत्युपलक्षणार्थं दुहिता च नास्तीत्यपि बोद्धव्यम्।

यथैवात्मा तथा पुत्त्रः पुत्त्रेण दुहिता समा।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्॥

इति मनुवचनेन—

अङ्गादङ्गात् सम्भवति पुत्त्रवद्दुहिता नृणाम्।
तस्याः पितृधनन्त्वन्यः कथं [1]गृह्णीत मानवः॥

इति बृहस्पतिवचनेन च—

भ्रातृसद्भावेऽपुत्त्रधने दुहितृधिकारो दर्शितः।

गोत्रऋक्थानुगः पिण्ड इति मनुवचनान्तरम्—तेन पत्नीदुहित्रोरभाव एव भ्रातृधिकारः।

सहोदरग्रहणात् सपत्नभ्रातृसद्भावेऽपि सहोदरभ्रातृपुत्त्राधिकारं दर्शयति। यत्र तु सहोदरो भ्राता ज्येष्ठोऽस्ति सोदरभ्रातृपुत्त्रश्च तत्र सोदरभ्रातृपुत्त्रस्याधिकारो युक्तः—

---

(१) ग गृह्णात।

यद्येकजाता बहवो भ्रातरस्तु सहोदराः।
एकस्यापि सुते जाते सर्व्वे ते पुत्रिणो मताः॥

इति बृहस्पतिवचने पुत्रतुल्यकार्य्यकारित्वाभिधानात्—नानुजस्य तथाग्रज—इति निषेधाच्च।

ऊढ़ानामनूढ़ानां दुहितॄणामशौचान्तदिनद्वितीयदिने पितैकादशाहश्राद्धं कुर्य्यात्। [1][अशौचं चौर्त्त्वेत्यत्र तस्यैव श्राद्धस्य प्रकृतत्वात्। अर्थादशौचमध्ये दशाहकृत्यं कार्य्यम्]।

दत्ता वाग्दत्ताश्च पितृगृहस्था दुहितरस्त्रिरात्राशौचभागिन्यः। तेन चतुर्थेऽहनि कुर्य्युः।

दश पिण्डानेकाहेनैवेति ऋष्यशृङ्गवचनं [2]वाग्दानात् पूर्व्वं बोद्धव्यम्।

दत्तानां भर्त्तृगृहावस्थाने च अहनि चापरे इत्यशौचदिनादपरदिने इत्यर्थः। द्वितीयेऽहनीत्यपि अशौचान्तदिनादेव द्वितीये।

जामातुः श्वशुरस्य मित्रस्य नैरन्तर्य्येण चिरकालमत्यन्तमनुवर्त्तमानस्नेहातिशयस्य तत्पुत्त्रस्य च श्रोत्रियस्य सहवासिनो गुरोश्च यत्र तत्र स्थितस्य भागिनेयपुत्त्रस्यार्थाद्भागिनेयस्य च यस्य यावदशौचं तस्मादपरदिने तदेव प्रकृतश्राद्धं कार्य्यम्।

प्रथमे इत्यशौचान्तदिने इत्यर्थः। जलेन क्रिया जलक्रिया तर्पणं पिण्डदानञ्च तां स्नानपूर्व्वमशौचमध्ये कृत्वेत्यर्थः।

---

(१) ख पुस्तके [ ] चिह्नितांशः पतितः।
(२) ख वाग्दानपर्य्यन्तं।

राज्ञो ब्राह्मणपरिणीतक्षत्रियाजातस्य नृपतेः सपिण्डे ब्राह्मणेऽपत्यपत्नीरहिते मृते पुरोहितेन तदशौचमङ्गीकृत्याशौचकर्त्तव्यम् सर्व्वं समाप्याशौचान्तद्वितीयदिने तदेव प्रकृतश्राद्धं कुर्व्वीत। क्षत्रियादौ तु नृपतेः सपिण्डे मृते मन्त्री[1] क्षत्रियादिजातीयस्तथैव कुर्य्यात्।

ब्राह्मणपुत्राः क्षत्रियादयो ब्राह्मणाय कर्त्तुमधिकारिणः स ब्राह्मणपिता न तादृशेभ्यः क्षत्रियादिभ्यः पुत्रेभ्य इत्यर्थः।

---

## अथास्थिसञ्चयनम्।

विष्णुः—

चतुर्थे दिवसेऽस्थिसञ्चयनं कुर्य्यात्तेषाञ्च गङ्गाम्भसि प्रक्षेपः।

यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति।
तावद्वर्षसहस्राणि स्वर्लोकमधितिष्ठति[2]॥

कात्यायनः—

सञ्चयनञ्चतुर्थ्यामयुग्मान् ब्राह्मणान् भोजयित्वा—पलाशवृन्तेनास्थीनि परिवृत्याङ्गुष्ठकनिष्ठाभ्यामादाय पलाशपत्रपुटे प्रास्यति शम्यवकाः कर्द्दमञ्च श्मशानेऽङ्गास्थीनि सर्व्वसुरभिमिश्राणि दक्षिणपूर्व्वायतां कर्षूं खात्वा कुशानास्तीर्य्य वस्त्रावकृतञ्च हारिद्रं—वागिति निर्वपत्यस्मिन्—एतद्वाजसनेयमित्यनेन ध्यात्वा

---

(१) घ सपिण्डमन्त्री।
(२) ख स्वर्गलोके महीयते।

मनसाऽनार्त्तेन वाचा ब्राह्मण्या त्रय्या विद्यया पृथिव्यामक्षताया-मपां रसेन निर्वपाम्यसाविति श्मशानं चिकीर्षतः कुम्भेषु सञ्चयनं निधानञ्च तूष्णीम्।

चतुर्थ्यामिति चतुर्थदिवसे इत्यर्थः। अयुग्मान् भोजयित्वेत्यनेन श्राद्धं दर्शयति यदामश्राद्धमिति प्रसिद्धम्। एतत् प्रथमं कार्य्यं ततोऽस्थिसञ्चयः।

प्रास्यति प्रक्षिपति ततोऽस्थीनि सर्व्वसुरभिमिश्राणि कृत्वा शमीपत्रं—अवकाः कण्टकशैवालं कर्द्दमञ्चास्युपरि प्रास्यती-त्यनुषङ्गः।

अङ्क्तेति—शम्यवकाकर्द्दमैरस्थीनि म्रक्षयित्वेत्यर्थः। श्मशाने कर्षूं खात्वेत्यर्थः। इयञ्च कर्षूर्दूरनिम्ना दूरदीर्घा च कार्य्या अस्थिस्थापनार्थत्वात्। ततः कर्षूमध्ये कुशानास्तीर्य्य आस्तीर्ण-कुशोपरि हारिद्रं हरिद्राम्रक्षितं वस्त्रावकृतं वस्त्रैकदेशमास्तरेत्।

ततो वागित्यादिमन्त्रेण एतदित्यादिना च-असावित्यन्तेन मन्त्रेणास्मिन्नास्तीर्णहरिद्रारञ्जितवस्त्रैकदेशोपरि तान्यस्थीनि निर्वपति निःशेषाणि स्थापयेदित्यर्थः।

अस्मिन्नेव स्थाने श्मशानं कर्त्तुमिच्छतोऽन्यान् नरानवगम्य कुम्भेषु' सञ्चयनं कुर्य्यात् न पलाशपत्रपुटे, श्मशानान्तराशङ्कारहिते च स्थानान्तरे कर्षूं कृत्वा लिखितमन्त्रद्वयव्यतिरेकेण पूर्व्वोक्तं सर्व्वं कृत्वा निधानं स्थापनं कुर्य्यात्।

---

(१) क ग कुण्डेषु।

एतदुक्तं भवति—यदि पुनः शवान्तरदाहशङ्का नास्ति तदा प्रथमोक्तः प्रकार एव।

छन्दोगपरिशिष्टं कात्यायनः—

अपरेद्युस्तृतीये वा अस्थ्नां सञ्चयनं भवेत्।
यस्तत्र विधिरादिष्ट ऋषिभिः सोऽधुनोच्यते॥
स्नानान्तं पूर्व्ववत् कृत्वा गव्येन पयसा ततः।
सिञ्चेदस्थीनि सर्व्वाणि प्राचीनावीत्यभाषयन्॥
शमी-पलाशशाखाभ्यामुद्धृत्योद्धृत्य भस्मनः।
आज्येनाभ्युक्ष्य गव्येन सेचयेद्गन्धवारिणा॥
मृत्पात्रपुटके कृत्वा सूत्रेण परिवेष्ट्य च।
अभ्रंशिन्यां शुचौ भूमौ निखनेद्दक्षिणामुखः॥
पूरयित्वाऽवटं पङ्कं पिण्डं शैवालसंयुतम्।
दत्त्वोपरि समं शेषं कुर्य्यात् पुण्याहकर्म्मणा॥
एष एवागृहीताग्नेः प्रेतस्य विधिरिष्यते।
स्त्रीणामिवाग्निदानं स्यादथातोऽनुक्तमुच्यते॥

त्र्यहाशौचे त्वपरेद्युरगृहीताग्नेः स्मार्त्ताग्निनाऽपि रहितस्य स्त्रीणामिवेत्यग्निप्रदानमन्त्रो न प्रयोज्य इत्यर्थः।

यथा तत्रैव

अग्निप्रदानमन्त्रोऽस्या न प्रयोज्य इति स्थितिः।

आश्वलायनः—

सञ्चयनमूर्द्ध्वं दशम्याः कृष्णपक्षस्याश्वयुजास्विकनक्षत्रेऽलक्षणे कुम्भे पुमांसमलक्षणायां स्थाल्यां स्त्रियमयुजो मिथुनाः प्रवयसः

क्षीरोदकेन शमीलतया[१]ऽपसव्यं परिव्रजन्तः[२] प्रोक्षन्तीति शीतिके शीतिकावतीत्यङ्गुष्ठोपकनिष्ठाभ्यामेकैकमस्थ्यसंक्रादयन्तोऽवदध्युः-- पादौ पूर्व्वं शिर उत्तरं सुसञ्चितं सञ्चिन्त्य पवनेन सम्पूय यत्रैवमापो नाभिस्यन्देरन् अन्यावर्षाभ्यस्तत्र गर्त्तेऽवदध्युः। उपसर्प मातरं भूमिमेतामिति चतस्र उत्तरया पांशूनवकिरेत। अवकीर्य्योत्तरया तुभ्नामीति कपालेन पिधायाथानवेक्षं प्रत्यावृत्त्याप उपस्पृश्य श्राद्धमस्मै दद्युः। गुरुणाभिमताऽन्यतो वा अवक्षीयमाणात्।

दशम्या रात्रेरूर्द्ध्वं दशाहोत्तरकालं यः कृष्णपक्षः प्राप्यते तस्याश्वयुजासु[३] अयुग्मासु तिथिषु प्रतिपत्-तृतीया-पञ्चमी-प्रभृतिषु एकनक्षत्रे एकतारके नक्षत्रेऽश्विन्यादिनक्षत्रेषु बह्वन्यनेकनक्षत्राणि आर्द्रा-चित्रा-स्वात्य एकतारकाः।

अलक्षणे भग्नकर्णे[४] वोड़ इति प्रसिद्धे अलक्षणायां स्थाल्यां मिथुनं पुरुषद्वयं[५] बहुवचनात् त्रयो मिथुनाः षट्पुरुषा इत्यर्थः।

पञ्च वा मिथुना दश पुरुषाः प्रवयसः प्रकृष्टवयसः शमीवृक्षशाखाग्रस्रवता क्षीरमिश्रोदकेन प्रवयसो मिथुना अस्थीनि

---

(१) ख शमीशाखायाम्। घ शमीशाखया।
(२) घ परिव्राजकाः प्रोक्षेयुः। ग परिव्रजन्।
(३) क अयुजासु।
(४) ख भग्नकुम्भे। घ सुग्नकर्णे।
(५) क ग स्त्रीपुरुषम्।

प्रोक्षयेयुरिति सम्बन्धः। अपसव्यं वामावर्त्तेन परिव्रजन्तः परिक्रामन्त इत्यर्थः[1]।

परिव्रजन् प्रोक्षतीति यदि पाठस्तदा सुपां सुपो भवन्तीति तिङां तिङो भवन्तीति बहुवचनस्थले एकवचनम्।

परिव्रजन्तः प्रोक्षन्तीति पाठः साधुरेव। एकैकमस्थिखण्डमङ्गुष्ठानामिकाभ्यां गृहीत्वा शीतिके शीतिकावतीत्यादिमन्त्रेण पुंसः कुम्भेऽलक्षणे प्रवयसो मिथुना अवदध्युर्निःक्षिपेयुः।

स्त्रियास्तु स्थाल्यामलक्षणायां असंक्रादयन्त इति तथा प्रक्षेप्तव्यं यथाऽस्थिखण्डान्तरेण सङ्घर्षाच्छब्दो न भवति।

पादौ पूर्व्वमिति प्रथमं पादसम्बन्ध्यस्थि सञ्चेतव्यम् ततः शिरःसम्बन्ध्यस्थीत्यर्थः। सुसञ्चितं यथा प्रचलनं न भवतीत्यर्थः।

पूयतेऽनेनेति पवनं घृतक्षीरादि तेन सम्भूय स्वक्षयित्वेत्यर्थः।

यत्र प्रदेशे वर्षाकालीनजलप्रवाहव्यतिरिक्ता आपो नद्यादिसम्बन्धिन्यो नाभिस्यन्देरन् नाभिस्रावयन्ति[2] नाकर्षयन्तीति यावत् तत्र गर्त्तं कृत्वा अवदध्युः प्रोथयेयुरित्यर्थः। उपसर्पमातरं भूमिमेतामित्याद्यायतस्त्र ऋच उच्चार्य्य गर्त्ते अवदध्युरिति सम्बन्धः।

अस्मादृक्चतुष्टयादुत्तरया ऋचा गर्त्ते पांशून् क्षिपेत् तदनन्तरमेव उत्तरया तुभ्नामीत्यादिकया ऋचा कपालेन भग्नघटैक-

(१) ख घ परिव्रजन्ति परिक्रामन्तीत्यर्थः।

(२) घ नाभिसिम्रयन्ति।

देशेन पिधाय ढक्कयित्वा अथानवेच्यास्थि निधाय स्नानदर्शनं यथा न भवति तथा आगत्य अपः स्पृष्ट्वा स्नात्वेत्यर्थः।

आद्यं त्वस्थिसञ्चयननिमित्तम्। यदि तु दशाहानन्तरं शुक्लपक्षो भवति कृष्णपक्षो वा अयुग्मतिथिरेकनक्षत्रयोगो नास्ति तदा गुरुणोपदिष्टा अनुमताः सन्त अवक्षीयमाणात् कृष्णपक्षादन्यतः शुक्लपक्षेऽपि कुर्य्युः। इदञ्चास्थिसञ्चयनमृग्वेदिनाम्। छन्दोगपरिशिष्टोक्तं सामवेदिनाम्। कात्यायनोक्तं यजुर्व्वेदिनाम्।

सम्वर्त्तः,—

प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा।
[1][अस्थिसञ्चयनं कार्य्यं [2]निजैस्तद्गोत्रजैर्मृते॥

यथाविहितकालपर्य्यन्तं रक्षणाशक्तौ प्रथमेऽहनि तृतीये वा कार्य्यं चतुर्थाहमध्ये दैवकराजकवशादकरणे सप्तमे नवमे वा]।

आदिपुराणे,—

स्नात्वा त्रिरात्रं कुर्व्वन्ति प्रेतायोदकतर्पणम्।
श्मशानदेवतायागश्चतुर्थे दिवसे ततः॥
भवन्ति पूजिता यस्मात्तत्रस्थाः शङ्करादयः।
स्नातैः सुधौतवस्त्रैश्च श्मशानस्य समीपगैः॥
[3]स्वजातिविहितैर्द्रव्यै र्यथाशक्त्या समाहितैः।
मृन्मयेषु च भाण्डेषु कृत्येषु चरुकेषु च॥

---

(१) घ पुस्तके [ ] चिह्नितांशः पतितः।
(२) ग द्विजैः।
(३) घ भक्त्याय।

[1]सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा।
फलैर्मूलैर्वनोत्थैश्च पूज्याः क्रव्याददेवताः॥
कैश्चिदर्घ्यं प्रदातव्यं कैश्चित् पुष्पञ्च शोभनम्।
धूपो दीपस्तथा माल्यं कैश्चिद्देयं त्वरान्वितैः॥
तत्र पात्राणि पूर्णानि श्मशानाग्नेः समन्ततः।
कैश्चिद्देयानि सर्व्वाणि यानि यान्याहृतानि च॥
निवेदयेति वक्तव्यं तैः सर्व्वैरनहङ्कृतैः।
नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्व्वदा॥
येऽस्मिन् श्मशाने देवाः स्युर्भगवन्तः सनातनाः।
तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गमक्षयम्॥
प्रेतस्यास्य शुभाल्लोकान् प्रयच्छन्त्वपि शाश्वतान्।
अस्माकमायुरारोग्यं सुखञ्च [2]ददतां वरम्॥
एवं दत्वा बलीन् सर्व्वान् क्षीरेणाभ्युक्ष्य वाग्यतैः।
विसर्ज्जनञ्च देवानां कर्त्तव्यन्तु समाहितैः॥
ततो यज्ञीयवृक्षाणां[3] शाखामादाय वाग्यतः।
अपसव्यं क्रमाद्वस्त्रं कृत्वा कश्चित् सगोत्रजः॥
प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानि च।
पञ्चगव्येन सुस्नाप्य क्षौमवस्त्रेण वेष्ट्य च॥

---

(१) ख अपक्वैः।
(२) क ग ददताक्षयम्।
(३) ख—यज्ञीयवृक्षोत्थाम्।

प्रक्षिप्य मृन्मये भाण्डे नवे साच्छादने शुभे।
अरण्ये वृक्षमूले वा शुद्धे [1]संस्थापयन्त्यपि॥
तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले।
कश्चित् क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः॥
गृहीत्वाऽस्थीनि तद्भस्म नीत्वा तोये विनिःक्षिपेत्।
तदन्नमन्त्यजादीनां दद्यादम्भसि वा क्षिपेत्॥
ततः सम्मार्ज्जनं भूमेः कर्त्तव्यं गोमयाम्बुभिः।
पूजा च पुष्पधूपाद्यैर्बलिभिः पूर्व्ववत् क्रमात्[2]॥
भूमेराच्छादनार्थन्तु वृक्षः पुष्करकोऽथवा।
पट्टको वा प्रकर्त्तव्यस्तत्र सर्व्वैः स्वबन्धुभिः॥
ततः सचेलस्नानन्तु कर्त्तव्यन्तैर्विधानतः।

तथा—

क्वचित्तृतीये विप्रस्य चतुर्थे क्षत्रियस्य च॥
पञ्चमे वैश्यजातेश्च शूद्रस्य दशमेऽहनि।
अस्थ्नां तु सञ्चयः प्रेते क्रियते देशगौरवात्॥
जीवतामपि वर्णानां संस्पर्शे चाऽप्ययं क्रमः।
चतुर्थे ब्राह्मणानान्तु पञ्चमेऽहनि भूभृताम्॥
नवमे वैश्यजातीनां शूद्राणां दशमात् परे।
कर्त्तव्यन्तु नरैः श्राद्धं देशकालाविरोधतः॥

---

(१) मूलपुस्तके संस्थाप्य यन्त्यपि।
(२) क क्रता।

[१]सपिण्डाश्च सजातीयास्तथाऽन्येऽपि बुभुक्षिताः ।
दीनानाथान्धकृपणास्तत्रान्न[२]मपि भुञ्जते ॥

तथा—

तत्राहाशौचे द्वितीयेऽह्नि कर्त्तव्यस्त्वस्थिसञ्चयः ।
सद्यःशौचे तत्क्षणन्तु कर्त्तव्य इति निश्चयः ॥

तथा—

अस्थीनि मातापितृपूर्व्वजानां
नयन्ति गङ्गामपि[३] ये कदाचित् ।
सद्भावकस्यापि[४] दयाभिभूताः
तेषान्तु तीर्थानि फलप्रदानि ॥
कुलद्वयञ्चाप्यथ वर्ज्जयित्वा
मातापित्रोर्जन्मभूम्याश्रितञ्च ।
अस्थीनि चान्यस्य [५]नरो वहंश्च
भाग्यक्षयं लभते दुष्कृतञ्च[६] ॥
भागीरथी यत्र यत्रास्ति तीर्थे
कुलद्वये चापि यदा विपन्नः ।

---

(१) क ग पुस्तकद्वये सपिण्डानाम् ।
(२) घ उपभुञ्जते ।
(३) घ गङ्गाम्भसि ।
(४) क ग सद्बन्धवोऽस्यापि ।
(५) क ग वहन्नयंश्च ।
(६) ग ताम्राक्षयां लभते दुष्कृतिश्च ।

तदा तदा तस्य तस्याथ भक्त्या
भावेन चास्थीनि विनिःक्षिपेच्च ॥
स्नात्वा ततः पञ्चगव्येन सिक्त्वा
हिरण्यमध्वाज्यतिलैश्च योज्य ।
ततस्तु मृत्पिण्डपुटे निधाय
पश्यन् दिशं प्रेतगणोपगूढ़ाम् ।
नमोऽस्तु धर्म्माय वदन् प्रविश्य
जलं स मे प्रीत इति क्षिपेच्च ॥
उत्थाय भास्वन्तमवेक्ष्य सूर्य्यं
स दक्षिणां[1] विप्रवराय दद्यात् ।
एवं कृते प्रेतपुरस्थितस्य
स्वर्गे गतिः[2] स्याच्च महेन्द्रतुल्या ॥
*सर्व्वेण गाङ्गेन जलेन सम्यक्
मृत्पर्व्वतेनाप्यथ भावदुष्टः ।
आजन्मनः स्नानपरोऽपि नित्यं
न शुध्यतीत्येव वयं वदामः ॥

तथा—

मातुः कुलं पितृकुलं वर्ज्जयित्वा नराधमः ।
अस्थीन्यन्यकुलोत्थस्य नीत्वा चान्द्रायणञ्चरेत् ॥

---

(१) मूले सुदक्षिणां ।
(२) क ग पुस्तकद्वये स्थितिः ।
* ख घ चिह्नितश्लोको नास्ति ।

श्मशानदेवतायागोऽयं प्रेतोपकारार्थः कर्त्तुश्चायुरादिफल-सिद्धिकरः प्रेतोपकारातिशयकरणादेवातो नायमावश्यकः।

शक्तस्तु श्रद्धाभक्त्यादियुक्तः कुर्य्यात्। मृन्मयभाण्डेषु पाकाधारेषु चरुकेषु स्थालीषु मृन्मयीष्वेव ओदनपाकार्थासु सुपक्वैरिति सम्बन्धः।

सुशब्दाददग्धत्वं सम्यक्सिद्धत्वञ्च दर्शयति। भक्ष्यं लड्डुकमोदकादि भोज्यमोदनादि। कैश्चित् कैश्चिदित्यसकृदभिधानात् समुदायकर्त्तृकतां दर्शयति [1][ अक्षतानि यवधान्यतिलमाषप्रभृतीनि पृथक् पृथक् पात्रकृतानि बहूनि यानि यानीति वीप्सां दर्शयति ] सर्व्वमष्टविधमपि बलेरङ्गं समुदायस्तेनैकेन निवेदयेत्युक्तोऽन्येन—

ॐ नमः क्रव्यादमुख्येभ्यो देवेभ्य इति मन्त्रेण दातव्यम्। सर्व्वदेत्यनेनाष्टस्वङ्गेषु सर्व्वेष्वेव प्रत्येकं निवेदयेत्यभिधानं दर्शयति।

अनहङ्कृतैरिति—तत्समुदायगतेन केनाप्यात्मगौरवाभिमानात् मयाप्येतद्दक्तव्यमित्यहङ्कारो न कर्त्तव्य इति दर्शयति।

अष्टाङ्गानि च—भक्ष्य-भोज्य पायस पानका एकमङ्गम्। फल-मूलेति द्वितीयम्। अर्घ्यं तृतीयम्। अनुक्तोऽपि गन्धः साहचर्य्याच्चतुर्थमङ्गम्। पुष्पं माल्यञ्च पञ्चमम्। धूपः षष्ठम्। दीपः सप्तमम्। यवधान्यादिपूर्णानि पात्राण्यष्टमम्।

अत्र न पाठक्रमेणानुष्ठानं किन्तु प्रसिद्धेनार्घ्यादिक्रमेणार्घ्यं निवेदयेत्।

---

(१) ग पुस्तके [ ] चिह्नितांशः पतितः।

एतदर्घ्यं ॐनमः क्रव्यादमुख्येभ्यो देवेभ्य इति च प्रयोगः। एवं गन्धस्य पुष्पमाल्ययोर्धूपस्य दीपस्य भोज्य-भक्ष्य-पायस-पानकानां यवादिपूर्णपात्राणां फल-मूलयोश्च।

एवमष्टाङ्गानि दत्त्वा—

येऽस्मिन् श्मशाने इत्यादि ददतां वरमित्यन्तं पठनीयम्।

ततो बलीनां क्षीराभ्युक्षणपूर्व्वकं क्रव्यादमुख्या देवाः स्वस्थानं गच्छन्तु तेभ्यो नम इति विसर्ज्जनम्। वस्त्रमुत्तरासङ्गं साहचर्य्याद्यज्ञोपवीतमपसव्यं कृत्वा क्रमादिति प्रथमं शिरोऽस्थीनि ततो हृदयादीनां गृह्णीयादित्यर्थः।

[1][ क्षौमवस्त्रं क्षुमाऽतसीति प्रसिद्धा यन्त्यपीत्यत्र यन्तीति इन गतावित्यस्य गच्छन्तीत्यर्थः, अपिशब्दो बहुतरेष्वेवादिपुराणवचनेषु निश्चयार्थः।

अनेकार्थत्वादव्ययानां तत्स्थानादित्यनेनोत्तरकालीनां प्रतिपत्तिमुक्त्वा गृहीत्वेत्यादिना तत्कालीनामाह।

पुष्करक इष्टकादिकृतसंस्थानविशेषः पट्टको दार्व्ववयवविशेषः।

प्रथमं भूमिरिति शब्दो बलिदानभूमिविषयः, द्वितीयः शवदाहस्थानगोचरः। देशगौरवादिति देशधर्म्मानुष्ठानादरार्थं मुनिभिरुक्तत्वादित्यर्थः।

एतेन देशविशेषव्यवस्थितत्वं दर्शितम्। जीवतामित्यादि सर्व्वदेशविषयम्। ] श्राद्धमस्थिसञ्चयननिमित्तम्।

---

(१) क पुस्तके [ ] चिह्नितांशः पतितः।

देशविरोधः सन्निहिततरतस्करव्याघ्रादिभिः कृतः। कालविरोधो विद्युदविरतवृष्ट्यादिभिः कृतः। अथवा विहितदेशकालातिक्रमो न कार्य्य इत्यर्थः।

पूर्व्वजो ज्येष्ठो भ्राता एतच्च मातुः पितुः पूर्व्वजस्य प्राधान्याय ग्रहणम्। पितृबन्धुकुल-मातृबन्धुकुल स्वकुलजातानां सर्व्वेषामेवोत्तरत्र ग्रहणात्। सद्भावकस्य भावशुद्धस्य अन्यकुलजातस्यापि कृपातिशयाद्धर्म्मबुद्ध्यानयने पुण्यातिशयार्थमिदमुक्तम्।

इष्टसमीहया तु प्रायश्चित्तं वक्ष्यते—यत्र यत्र तीर्थे भागीरथीत्यनेन प्रसिद्धेष्वपि तीर्थेषु गङ्गासम्बन्धिष्वेव प्रयाग-वाराणसी-कनखलप्रभृतिष्वस्थ्नां प्रक्षेपे पुण्यातिशयो न तु कुरुक्षेत्रादिष्विति दर्शयति।

स्नात्वा तत इत्यादिना प्रक्षेपविधिं दर्शयति—हिरण्यं सुवर्णकणा आज्यं घृतं कृतताम्रिकादिपात्रसंस्थानयोर्मृत्तिकापिण्डयोर्युग्मसुपर्य्यधोभावस्थितं मृत्पिण्डपुटकान्तर्मध्ये कृत्वेत्यर्थः।

प्रेतगणोपगूढ़ा दिक् दक्षिणा "ॐनमो धर्म्माय" इति गङ्गाजले प्रवेशमन्त्रः। स मे प्रीतो भवतु, इत्यस्थिप्रक्षेपमन्त्रः।

दक्षिणादानं शक्त्यनुरूपं पणपुराणादेरल्पस्यापि सुवर्णरजतादेर्दानं प्रेतपुरस्थितस्य यमपुर्य्यां नरकं गतस्यापीत्यर्थः।

---

## अथाशौचान्तकृत्यम्।

हारीतः,—

दशमेऽहन्यरण्यं गत्वा कृतश्मश्रुकर्म्माणः स्पृष्टान्युत्सृज्य तिल-कल्कावघृष्टा गौरसर्षपैः शिरःस्नाताः आहतवस्त्राः शुक्लवाससो वा अश्मावृष्टा गोहिरण्यादीन्यालभ्य प्रविशेरन् शान्तिं कृत्वा श्वोभूत एकानुद्दिष्टं प्रदाय स्वस्त्ययनादिधर्म्मार्थान् प्रवर्त्तेरन्।

अरण्यं ग्रामाद्बहिरित्यर्थः। कृतश्मश्रुकर्म्माण इति बहु-वचनात् सर्व्वेषामेव सपिण्डानां चौरं दर्शयति। स्पृष्टानि अशौचकाले धृतानि वासांसीत्यर्थः। पिष्टास्तिलास्तिलकल्का-स्तैर्गात्रघर्षणं पिष्टैः श्वेतसर्षपैः शिरः प्रलेप्तव्यम्।

ततः स्नातव्यं नूतनवस्त्राभावे रजकधौतं प्रक्षालितं वासो धार्य्यम्। अरिष्टो निम्बः[1] श्वोभूते एकादशाहे शान्त्युदकं पैठी-नस्युक्तप्रकारेण कृत्वा। एकानुद्दिष्टं एकोद्दिष्टम्।

मनुः,—

विप्रः शुद्ध्यत्यपः[2] स्पृष्ट्वा क्षत्रियो वाहनायुधम्।
वैश्यः प्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः॥

[3]कृतक्रियः समाप्तदशाहकृत्यः अपः स्पृष्ट्वेति जलस्पर्शमात्रार्थमेव।

न तु—संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति।

इतिवत् स्नानार्थम्।

---

(१) घ अरिष्टं निम्बपत्रम्।

(२) ख शुध्येदपः।

(३) क ग पुस्तके कृतक्रिय इति पतितम्।

वाहनादिस्पर्शसाहचर्य्यात् प्रतोदः पाँचनीति प्रसिद्धः। रश्मिर्योत्रं यष्टिर्वेणुदण्डिका।

देवलः,—

अघाहःसु निवृत्तेषु सुस्नाताः कृतमङ्गलाः।
आशुच्याद्विप्रमुच्यन्ते ब्राह्मणान् स्वस्ति वाच्य च॥
मङ्गलं शान्त्युदकं गोहिरण्यादिस्पर्शश्च।

अनेन वचनेन शान्त्युदक-गवादिस्पर्श-ब्राह्मणस्वस्तिवाचनै-र्विनाऽशौचनिवृत्तिर्नास्तीति दर्शयति।

पैठीनसिः,—

श्वो भूतेऽग्निमुपसमाधाय शान्त्युदकं कुर्य्यात्।

शन्नोदेवीरिति सूक्तेन प्रथमम्। द्वाभ्यां द्वितीयम् शन्नोदेवी-रग्नयो न इति शन्न इन्द्राग्नी—तदस्तु मित्रावरुणा इति तृतीयम्। शम्मा वातेन्द्रजीव यस्मात् कोपात् पृथिवी शान्तिरिति चतुर्भि-श्चतुर्थम्। उभयत्र सर्व्वत्र सावित्रीं शान्तिं कुर्य्यात्। तृतीये शर्कराश्च कुलत्थश्च सव्येनाचम्य निष्ठीवेत् विवस्वानिन्द्रमित्युक्तम्।

दशरात्रे केश-श्मश्रु-नख-लोमानि वापयित्वा आत्मनः शान्ति-निमित्तं शान्त्युदकं कुर्य्यात्। अयुग्मान् ब्राह्मणान् भोजयेत्।

अत्र श्लोकौ—

यदि कर्त्ता न विद्येत प्रेतसूतककर्म्मणि।
दशरात्रोषितः स्नात्वा कुर्य्याच्छान्त्युदकं स्वयम्॥

यस्येह कर्त्ता शक्तश्चेत् त्रिरात्रं मारुताशनः।
स्नात्वा चतुर्थदिवसे ततः शान्तिं समाप्नुयात्॥

श्वोभूते दशमदिनादेकादशाहे इत्यर्थः। अग्निं प्रज्वाल्य अग्निसमीपे शान्त्युदकं कार्य्यम्। चतुर्धा शान्तिकरणम्।

तत्र शन्नोदेवीरित्यादिसूक्ते यावत्य ऋचस्तावतीभिः सर्व्वाभिरेव प्रथमं शान्तिकरणम्। शन्नोदेवीरित्यन्वयो न इति ऋक्चतुष्कात्मकं ताभ्यां सूक्ताभ्यां द्वितीयं शान्तिकरणम्।

शन्न इन्द्राग्नीत्यादि तदस्तु मित्रावरुणा इत्यन्ताभिः षोड़शभिरिति तृतीयशान्तिकरणम्।

शम्मा वातेन्द्रजीव यस्मात् कोषात् पृथिवी शान्तिरिति चतुर्भिश्चतुर्थम्।

सर्व्वत्र चतुर्ष्वपि शान्तिकरणेषु उभयत्रेति आदावन्ते च सावित्रीं सवितृदेवताकां तत्सवितुर्वरेण्यमित्यर्थः।

तृतीये शान्त्युदके कर्त्तव्ये शर्करा-कुलत्थौ वामहस्तेन भक्षयित्वा निष्ठीवनं कार्य्यम्। शर्करा गाङ्गटी।

विवस्वानिन्द्रमिति त्वन्नोभयङ्कृणोतु तथा इन्द्रं वरुणमिति ऋक्त्रयं पाठ्यत्वेनोक्तम्।

एतच्च दशमदिवसे केशादिमुण्डनं कृत्वा पठनीयमित्यर्थः। रोमशब्दो रहस्यरोमग्रहणार्थः।

एकादशाहे यच्चतुर्धा शान्तिकरणमुक्तं तदात्मन एवाशौचदिवसोत्पन्नपापशान्त्यर्थं न तु प्रेतोपकारार्थम्। दशरात्रोषितोऽतिक्रान्ते दशरात्र एकादशाह इत्यर्थः।

यस्य च मृतकाशौचवतः शान्त्युदककर्त्ता [1][ ऋत्विगादि-र्नास्ति स स्वयं कुर्य्यात् ] अथ ऋत्विगादिरस्ति स ऋत्विगादिः त्रिरात्रोपवाससमर्थो भवति तदाष्टमनवम-दशमदिनेषु वाता-हारो भूत्वा एकादशाहे शान्तिं कुर्य्यात् अशक्तस्त्रिरात्रं हविष्यं भुञ्जीत।

आदिपुराणे,—

यस्य यस्य तु वर्णस्य यद्यत्स्यात् पश्चिमन्त्वहः।
स तत्र वस्त्रशुद्धिञ्च गृहशुद्धिं करोत्यपि॥
समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम्।
ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे च वाससी॥
अन्त्यानामाश्रितानाञ्च त्यक्त्वा स्नानं करोति[2] सः।
श्मश्रु-लोमनखानाञ्च यत्त्याज्यं तज्जहात्यपि॥
गौरसर्षपकल्केन तिलतैलेन संयुतः।
शिरःस्नानं पुनः कृत्वा तोयेनाचम्य वाग्यतः॥
वासोयुग्मं नवं शुक्लमव्रणं शुद्धमेव वा।
गृहीत्वा गां सुवर्णञ्च मङ्गलानि शुभानि च।
स्पृष्ट्वा सङ्कीर्त्तयित्वा च पश्चाच्छुद्धो भवेन्नरः॥

प्रेतस्पृष्ट इति यद्वस्त्रयुग्मं गृहीत्वा प्रेतक्रिया कृतेत्यर्थः। श्मश्र्वादीनां मध्ये यत्त्याज्यं त्यागार्हं सर्व्वदा त्यज्यते इत्यर्थः।

---

(१) क ख ग पुस्तके [ ] चिह्नितांशः पतितः।

(२) घ करोत्यपि।

एतेन [1]वक्षःकक्षादिलोम्नामत्यागः । तिलतैलसंयुतः शिरस्य-भ्यक्त इत्यर्थः ।

तिलतैलेन शिरोऽभ्यज्य श्वेतसर्षपकल्केन शिरो लिप्त्वा पुनस्तोयेन स्नानं कुर्य्यादित्यर्थः ।

एवं नवशुक्लवस्त्राभावे रजकनिर्णिक्तं पुनर्मृत्तोयप्रक्षालितं छिद्रशून्यं वासो बिभृयादित्यर्थः ।

मङ्गलानि—आदर्श-शुक्ति-गोरोचना-घृतप्रभृतीनि शुभानि दोषरहितानि ।

मत्स्यपुराणे—

सूतकान्ताद्द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम् ।
काञ्चनं पुरुषं तद्वत् फलवस्त्रसमन्वितम् ॥
सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः ।
वृषोत्सर्गञ्च कुर्व्वीत देया च कपिला शुभा ॥

द्विजदम्पती भूषयित्वा काञ्चनं प्रेतप्रतिकृतिरूपं पुरुषं फल-वस्त्रयुक्तं शय्यायामारोप्य भूषितदम्पतिद्विजाय तां शय्यां दद्यात् । कपिला पुण्यातिशयहेतुः । अभावे अन्याऽपि धेनुर्देया वृषवत्स-तरीणामलङ्कारं वाससी गाञ्चाचार्य्याय दद्यादिति छन्दोग-परिशिष्टदर्शनात् ।

एतच्च शय्यादानं वृषोत्सर्गश्च शक्तेनाशौचान्ताद्द्वितीयाह्णे

(१) ख—चक्षुः ।

मलमासेऽप्यवश्यं कर्त्तव्यम्। मत्स्यपुराणे एकादशाहश्राद्धतुल्य-
तया अभिधानात्।

यत्तु पद्मपुराणे,—

सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषितम्।

इत्येवमन्तं मत्स्यपुराणतुल्यमभिधायाधिकं शय्यादानविधानमुक्तम्
तत् पार्व्वतीयानामेव कामरूपादिवासिनां ब्राह्मणादीनामव-
श्यानुष्ठेयमिति तत्रैवोक्तम्।

तद्यथा,—

उपवेश्य च शय्यायां मधुपर्कं ततो ददेत्।
रजतस्य तु पात्रेण दधिदुग्धसमन्वितम्॥
अस्थि ललाटजं गृह्य [1]सूक्ष्मं कृत्वा सवज्रकम्[2]।
पायसैर्द्विजदाम्पत्यं नानाभरणभूषितम्॥
एष एष विधिर्दृष्टः पर्व्वतीयैर्द्विजोत्तमैः।
तेन दुष्टा तु सा[3] शय्या न ग्राह्या द्विजसत्तमैः॥
गृहीतायान्तु शय्यायां पुनः संस्कारमर्हति।
वेदे चैव पुराणे च शय्या सर्व्वत्र गर्हिता।
ग्रहीतारस्तु जायन्ते सर्व्वे नरकभागिणः॥

दधिदुग्धान्वितं मधुपर्कं रजतपात्रे कृत्वा दद्यात्। ततो
यदुद्देशेन शय्यादानं तस्य ललाटसम्बन्धि चास्थि गृहीत्वा

---

(१) क चूर्णम्।
(२) घ सवस्त्रकम्।
(३) ग दुष्टा शव-।

हीरकसहितमत्यन्तचूर्णं कृत्वा पायसे प्रक्षिप्य तत् पायसं द्विजदम्पतये भोजयेत्[१]।

इदञ्च सहीरकललाटास्थिचूर्णसहितपायसभोजनं मधुपर्कदानसहितं शय्यादानञ्च मत्स्यपुराणादधिकमेव।

अतएव नानाभरणभूषितमिति पुनरप्युक्तम् पार्व्वतीयधर्म्मत्वेनासार्व्वत्रिकत्वादेव कामधेनुकृता न लिखितम्।

अतएव पार्व्वतीयैर्विधिर्दृष्ट इत्यभिधानादन्यदेशीयानां विधानान्तरं सूचितम्। तच्च मत्स्यपुराणोक्तमेव।

अतो मत्स्यपुराणोक्तशय्याप्रतिग्रहो न निषिद्धः।

अतएव पद्मपुराणोक्तशय्याविधानान्तरे तेनेति तच्छब्देनास्थिचूर्णसहितपायसभोजनपरामर्शाच्छवशय्याग्रहणस्य लघुदत्वमुक्तम्।

वेदे चैव पुराणे चेत्यत्रापि प्रकृतत्वादियमेव शय्या निषिद्धा।

---

## अथोदकाद्यनर्हाः।

याज्ञवल्क्यः—

न ब्रह्मचारिणः कुर्य्युरुदकं पतिता न च।
पाषण्डमाश्रिताः स्तेना न व्रात्या न विकर्म्मिणः।
गर्भभर्त्तृद्रुहश्चैव सुराप्यश्चैव योषितः॥

---

(१) ख मधुपर्कं ददेत्।

आचार्य्य-पितृ-मातृ-गुरूपाध्यायव्यतिरिक्तानां प्रेतोदकाञ्जलिदानं तावद्ब्रह्मचारिणो न कुर्य्युः। आचार्य्यादीनान्तु विशेषं वक्ष्यामः।

पाषण्डं वेदवाह्यागमवाह्योक्तधर्म्मः। स्तेनाः सुवर्णव्यतिरिक्तद्रव्यान्तरस्य सातत्येनापहर्त्तारः। सुवर्णस्तेनस्य पतितग्रहणेनैव गृहीतत्वात्। व्रात्याः षोड़शवर्षपर्य्यन्तं यावदकृतोपनयना अकृतप्रायश्चित्ताः। विकर्म्मिण आलस्यादश्रद्धानतया च स्वकर्म्माननुष्ठायिनः।

मनुः,—

आदिष्टी नोदकं कुर्य्यादा व्रतस्य समापनात्।
समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुध्यति॥
आचार्य्यं स्वमुपाध्यायं पितरं मातरं गुरुम्।
निर्हृत्य तु व्रती प्रेतान् न व्रतेन [1]वियुज्यते॥

तत्तद्वेदैकदेशाध्यायनाङ्गभूतं व्रतमादिष्टं ब्रह्मचारिणो यस्य अन्यो वा यश्चान्द्रायणादिव्रतं करोति स आदिष्टी स चारब्धव्रतं यावन्न समाप्यते तावदाचार्य्यादीनामपि पञ्चानां प्रेतोदकं न कुर्य्यात्।

यदा त्वाचार्य्यादीनां पञ्चानां दहनवहनकर्त्ताऽन्यो नास्ति तदारब्धव्रतोऽप्येषां वहनादिकं कुर्य्यादेव व्रतलोपश्च न भवति।

उपनयनपूर्व्वं-कृत्स्नवेदशाखाध्यापयिता आचार्य्यः। वेदैक-

(१) ख विमुच्यते। घ प्रमुच्यते।

देशस्य वेदाङ्गानाञ्चाध्यापयिता उपाध्यायः। वेदस्य वेदाङ्गानाञ्च व्याख्याता गुरुः।

वसिष्ठः,—

ब्रह्मचारिणः शवकर्म्मणा व्रतान्निवृत्तिरन्यत्र मातापित्रो-र्गुरोर्वा।

शवकर्म्म दहनवहनादि व्रतान्निवृत्तिर्व्रतलोपो भवतीत्यर्थः। गुरुशब्देनाचार्य्योपाध्याययोर्ग्रहणम्।

एतेनैतदुक्तं भवति आचार्य्यादिपञ्चकव्यतिरिक्तानां वहन-दहनादि सर्व्वथैव न कार्य्यं व्रतलोपप्रसङ्गात्।

मनुः—

वृथा सङ्करजातानां प्रव्रज्यासु च तिष्ठताम्।
आत्मनस्त्यागिनाञ्चैव निवर्त्तेतोदकक्रिया॥
पाषण्डमाश्रितानाञ्च चरन्तीनाञ्च कामतः।
गर्भभर्त्तृद्रुहाञ्चैव सुरापीनाञ्च योषिताम्॥

हीनवर्णेनोत्कृष्टस्त्रीषु जाता वृथासङ्करजाताः सर्व्वधर्म्मानु-ष्ठानप्रतिषेधात्। उत्कृष्टवर्णेन तु अपकृष्टस्त्रीषु जाता न वृथा सङ्करजाताः। स्वमातृजातिविहितधर्म्मानुष्ठानस्यानुज्ञातत्वात्।

आत्मत्यागिनः—उद्बन्धनविषभक्षणादिना बुद्धिपूर्व्वकसम्पा-दितमरणाः स्वधर्म्माननुष्ठायिनो वा आत्मत्यागिन आत्महितानाचरणात्। पाषण्डमाश्रिताः स्त्रियः पुरुषाश्च कामतश्चरन्त्यः-अगणितपुरुषगामिन्यः स्त्रियः सर्व्वेषां मृतानां प्रेतोदकदहना-दिकं न कार्य्यमुदकक्रियाग्रहणस्योपलक्षणत्वात्।

यमः,—

वृथा सङ्करजाताश्च आश्रमान्तरिताश्च ये।
दत्तानाञ्चैव कन्यानां निवर्त्ततोदकक्रिया॥

आश्रमान्तरिताश्चतुर्थाश्रमिणः। दत्तानाञ्च कन्यानां भर्त्तृपक्षे कर्त्रन्तरसम्भवे उदकक्रियाया आवश्यकत्वमुक्तं पितृपक्षीयाणां निषिध्यते। कर्त्रन्तराभावे त्वावश्यकत्वमुक्तमेव कर्त्रन्तरसम्भवेऽपि स्नेहादुपकारबुद्ध्या वा करणमनिषिद्धम्।

पराशरः,—

विषोद्बन्धनशस्त्रेण चात्मानं योऽभिघातयेत्।
मृतोऽमेध्येन लेप्तव्यो नान्यं संस्कारमर्हति॥

विष्णुः,—

आत्मत्यागिनः पतिताश्च नाशौचोदकभाजनाः।
पतितस्य दासी मृताह्नि पदा घटमपवर्ज्जयेत्॥

पतितस्य दासीत्यस्यार्थं आदिपुराणवचने व्यक्तो भविष्यति।

आदिपुराणे,—

प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः[1]।
शृङ्गि-दंष्ट्रि-नखि-व्याल-विष-विद्युज्जलाग्निभिः॥
चाण्डालैरथवा चौरैर्निहतो यत्र कुत्रचित्।
तस्य दाहादिकं कार्य्यं यस्मान्न पतितश्च सः॥

(१) ख-देशितः।

शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रिया जलैः[1]।
आदरात् परिहर्त्तव्यः कुर्व्वन् क्रीड़ां मृतश्च यः॥
नागानां विप्रियं कुर्व्वन् दग्धश्चाप्यथ विद्युता।
निगृहीतस्तथा[2] राज्ञा चौर्य्यदोषेण कुत्रचित्॥
परदारानुरक्ताश्च[3] द्वेषात्तत्पतिभिर्हताः।
असमानैश्च सङ्कीर्णैश्चाण्डालाद्यैश्च विग्रहम्॥
कृत्वा तैर्निहतास्तांश्च चाण्डालादीन् समाश्रिताः।
गराग्निविषदाश्चैव पाषण्डाः क्रूरबुद्धयः॥
क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम्।
गिरि-वृक्ष-प्रपातञ्च ये कुर्व्वन्ति नराधमाः॥
कुशिल्पजीविनो येऽपि सूनालङ्कारकारिणः।
मुखेभगाश्च ये केचित् क्लीवप्राया नपुंसकाः॥
ब्रह्मदण्डहता ये वा ये च वै ब्राह्मणैर्हताः।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः।
न चाश्रुपातः पिण्डो वा कार्य्यं श्राद्धादिकं क्वचित्॥
एतानि पतितानान्तु यः करोति विमोहितः।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न संशयः॥

---

(१) घ विषविद्युज्जलाभिः।
(२) घ स्वयम्।
(३) घ परदारांश्च गन्तारः।

पतितस्य तु कारुण्याद्यस्तृप्तिं कर्त्तुमिच्छति।
स तु दासीं समाहूय सर्व्वगां दत्तवेतनाम्॥
अशुद्धघटहस्तान्तु यथावृत्तं ब्रवीत्यपि।
हे दासि गच्छ मूल्येन तिलानानय सत्वरम्॥
तोयपूर्णं घटञ्चेमं सतिलं दक्षिणामुखी।
उपविष्टा तु वामेन चरणेन ततः क्षिप॥
कीर्त्तयेः पातितीं संज्ञां त्वं पिबेति वदेर्मुहुः।
निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत्॥
एवं कृते भवेत्तृप्तिः पतितानां न चान्यथा।
क्रियते पतितानान्तु गते संवत्सरे क्वचित्॥
देशधर्म्मप्रमाणत्वात् गयाकूपेषु बन्धुभिः।
मार्त्तण्डपादमूले वा श्राद्धं हरिहरं स्मरन्॥

प्रमादादनवधानाद्वा निःशङ्कः शृङ्गिदंष्ट्रिनख्यादिहिंस्रसन्निधिशङ्कारहितः पुरुषो विधिचोदितो मरणकर्म्मप्रेरितः सन् यदा पलायनसमयस्याभावादकस्मात् झटित्येव शृङ्गादिभिर्निहतो भवति तदा सर्व्वमेव दाहादिकं कर्त्तव्यम्।

शृङ्ग्यादिभिस्तु सह क्रीड़ां कुर्व्वन् यो मृतः स आदरात् यत्नात् परिहर्त्तव्यः न तस्य दाहादिकं कार्य्यमित्यर्थः।

स्त्रिया सह क्रीड़ां परीहासं कुर्व्वन् तयैव दुष्टया अन्यप्रेरितया वा हतः तत्प्रसक्तेन वा केनचित्। जलैः क्रीड़ा बाहुभ्यां सन्तरणादिकाः। व्यालः सर्पः तेन सह क्रीड़ा सर्पखेलकानां प्रसिद्धैव।

विषक्रीड़ा औषधादिदर्पात् कौतुकेन वा समीक्षतमधुष्टतपानं मधुगुड़लाङ्गलिक्यादिविषभक्षणं वा।

नागानां मत्तदुष्टहस्तिनां विप्रियं कटारोहणादिकं साहसात् विद्युत्पतनदेशमुपसर्पन् विदुग्ता दग्धः। सङ्कीर्णैः प्रतिलोमसङ्करजातैश्चाण्डालैः सह कलहे तैरेव हताः सन्तो मृताः।

असमानैरित्यादिना चाण्डालादीनामन्योन्यकलहे तु मरणे पतितत्वं नास्तीति दर्शयति—किन्तूत्कृष्टानामेव। गरं व्याधिजनकौषधं पाषण्डाः प्रसिद्धा एव वेदवाह्याः क्रूरबुद्धयो नित्यं परापकारकरण एव येषां बुद्धिरुत्पन्ना। कुशिल्पजीविनः सज्जातीया एव सन्तः—चर्म्मास्थ्यादिमयवस्तुनिर्म्माणवर्त्तनाः।

सूना यत्र स्थाने सततं सापराधा मनुष्या बध्यन्ते तदलङ्कारकारिणस्तदधिकृताः सज्जातीया एव।

क्लीवप्राया नपुंसका इति—चतुर्द्दशप्रकारा नपुंसका नारदेनोक्ताः।

तत्र केचित् पुरुषकर्म्मकरणसमर्थाः। पुरुषकर्म्मकरणासमर्थास्तु क्लीवप्रायाः। ब्राह्मणविषयापराधकरणान्निहताः ब्रह्मदण्डहताः। सर्व्वगां हट्टचत्वरादिसर्व्वजनसम्मर्द्दस्थानगामिनीमवरुद्धाव्यतिरिक्तामित्यर्थः।

दत्तवेतनामित्यनेन यद्यपि दासीत्वात् सर्व्वाज्ञाकारिण्येव सा तथाप्येतत्क्रियाकरणार्थं तस्या वेतनं देयमिति दर्शयति।

[1]अशुद्धघट ( एटे घट आँड़ाप ) इति प्रसिद्धः, यथावृत्तं मृतस्य पतननिमित्तप्रकारम्, मूल्येनानयेति क्रीत्वानयेत्यर्थः।

सतिलं क्रीणातीति तिलमिश्रं जलपूर्णम्। पातितौ संज्ञां पतितस्य नाम कीर्त्तयेः—उच्चारय।

एतदुक्तं भवति—भो अमुक इदमुच्छिष्टघटस्थं सतिलं जलं पिबेति वारत्रयं ब्रूहीति वक्तव्यम्। लब्धमूल्येति—एवंविध-क्रियाकरणार्थं लब्धवेतनेत्यर्थः।

न चान्ययेति—एतद्व्यतिरिक्तं त्वमिहेत्वन्तरं नास्तीत्यर्थः। देशधर्म्मप्रमाणत्वादित्यनेन देशविशेषव्यवस्थितमेव संवत्सरोपरि पतितानां श्राद्धकरणमिति दर्शयति।

हरिहरं स्मरन्निति सुपां सुपो भवन्तीति न्यायात् स्मरद्भि-रित्यर्थः।

छागलेयः,—

सर्पविप्रहतानाञ्च शृङ्गि-दंष्ट्रि-सरीसृपैः।
आत्मनस्त्यागिनाञ्चैव श्राद्धमेषां न कारयेत्॥
नारायणबलिः कार्य्यो लोकगर्हाभया[2]न्नरैः।
तस्मात्तेभ्योऽपि दातव्यमन्नमेव सदक्षिणम्॥

तथा,—

(१) घ उच्छिष्टघट इत्यधिकः पाठः।
(२) क ग,-गर्हतया।

नारायणं समुद्दिश्य शिवं वा यत् प्रदीयते ।
तस्य दृषद्ग्रावहत्[1]ञ्चैव तद्भवेन्न तदन्यथा ॥

सर्पादिहतानामेव तद्वचनोपात्तानामेव व्यासवचनोपात्तानाञ्च चाण्डालादिहतानां नारायणबलिः कार्य्यो न त्वेतद्व्यतिरिक्तानां पतितानाम् । तेषामादिपुराण—विष्णुपुराणाभ्यां घटतोयादिदानस्योक्तत्वात् । यथा च नारायणबलिः कार्य्यस्तथा व्यासवचने व्यक्तं भविष्यति ।

व्यासः,—

इन्द्रियैरपरित्यक्ता ये च मूढ़ा विषादिनः ।
घातयन्ति स्वमात्मानं चाण्डालादिहताश्च ये ॥
तेषां पुत्राश्च पौत्राश्च दयया समभिप्लुताः ।
यथा श्राद्धं [2]प्रकुर्व्वन्ति विष्णुना वै प्रतिष्ठितम् ॥
यथावत् संप्रवक्ष्यामि नमस्कृत्य स्वयम्भुवे ।
एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ॥
विष्णुं समर्च्चयेद्देवं[3] यमं वैवस्वतन्तथा ।
दश पिण्डान् घृताभ्यक्तान् दर्भेषु मधुसंयुतान् ॥
तिलमिश्रान् प्रदद्याद्वि संयतो दक्षिणामुखः ।
विष्णुं बुद्धौ[4] समासाद्य नद्यम्भसि ततः क्षिपेत् ॥

---

(१) क ग शुद्धग्रावहम् ।
(२) क ख प्रतन्वन्ति ।
(३) घ समर्च्च्य देवेशम् ।
(४) क ख विष्णुबुद्ध्या ।

[1]नामगोत्रग्रहस्तत्र पुष्पैरभ्यर्च्चनन्तथा।
दीप-धूपप्रदानञ्च भक्ष्यं भोज्यन्तथापरम्॥
निमन्त्रयेद्द्वि विप्रान् वै पञ्च सप्त नवापि वा।
विद्यातपःसमृद्धांश्च कुलोत्पन्नान्[2] समाहितान्॥
अपरेऽहनि सम्प्राप्ते मध्याह्ने समुपोषितः।
विष्णोरभ्यर्च्चनं कृत्वा विप्रांस्तानुपवेशयेत्॥
उदङ्मुखान् यथाज्येष्ठं पितृपुत्रमनुस्मरन्।
मनो निवेश्य विष्णौ वै सर्व्वं कुर्य्यादतन्द्रितः॥
आवाहनादि यत् पूर्व्वं दैवपूर्व्वं तदाचरेत्।
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिं पृष्ट्वा यथाविधि॥
हविष्यव्यञ्जनेनैव तिलादिसहितेन च।
पञ्च पिण्डान् प्रदद्याच्च [3]देवरूपमनुस्मरन्॥
प्रथमं विष्णवे दद्यात् ब्रह्मणे च शिवाय च।
यमाय परिवाराय चतुर्थं पिण्डमुत्सृजेत्॥
मृतं सङ्कीर्त्त्य मनसा गोत्रपूर्व्वमतःपरम्।
विष्णोर्नाम गृहीत्वा वै पञ्चमं पूर्व्ववत् क्षिपेत्॥
विप्रानाचम्य विधिवत् दक्षिणाभिः समर्च्चयेत्।
एकं वृद्धतमं विप्रं हिरण्येन समर्च्चयेत्॥

---

(१) ख नामगोत्रे समुद्धृत्य।
(२) क ग कुलोपेतान्।
(३) क दैवपूर्व्वम्।

गवा [1]धान्येन भूम्या च प्रेतस्य मनसा स्मरन्।
ततस्तिलाम्भो विप्राश्च तिलैर्दर्भसमन्वितैः॥
[2]क्षिपेयुर्गोत्रपूर्व्वं हि नाम बुद्धौ निवेश्य च।
बहिर्गत्वा तिलाम्भस्तु तस्मै दद्यात् समाहितः।
मित्र-भृत्यजनैः सार्द्धं पश्चाद्भुञ्जीत वाग्यतः॥
एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिनां (ने)।
समुद्धरति तं [3]क्षिप्रं नात्र कार्य्या विचारणा॥

इन्द्रियैरपरित्यक्ता इति—जराजर्ज्जरिततयाऽचिकित्स्यव्याधि-गृहीतत्वात् ग्लानेन्द्रियग्रामा ये न भवन्ति ते यदि विषादिनो भवन्ति विषं भक्षयन्तीत्यर्थः—

उद्बन्धनोदरदारणादिना आत्मानं घातयन्ति। चाण्डाला-दिभिः सह कलहं कुर्व्वन्तो वा चाण्डालादिहता भवन्ति। शृङ्गि-दंष्ट्रादिभिर्वा क्रीड़ां कुर्व्वन्तो शृङ्गिदंष्ट्रादिभिर्मार्य्यन्ते तदाऽयं वक्ष्यमाणो नारायणबलिः कार्य्यो न त्वन्यत् किञ्चिद्दाहादिकम्।

इन्द्रियपरित्यक्तानान्तु—

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।

इत्यादिगार्ग्यवचने—

दुश्चिकित्स्यैर्महारोगैर्गृहीतस्तु पुमान् यदि।

---

(१) घ चान्येन।
(२) क ग क्षिपेद्यत्।
(३) क घ विप्रम्।

इत्यादिपुराणवचने चात्मघातो विहित एवेति दर्शितं सद्यः-शौचप्रकरणे।

अतएव तेषां सर्व्वमेव दाहोदकश्राद्धादिकं कर्त्तव्यमेव न तु नारायणबलिः।

नाम-गोत्रग्रहमिति—प्रेतस्य नामगोत्रोच्चारणपूर्व्वकं विष्णुं बुद्धौ समासन्नं कृत्वा ध्यात्वेति यावत् यथोक्तान् दश पिण्डान् दद्यात्।

ततो गन्ध-धूप-दीप-भक्ष्य-भोज्यदानं पिण्डसमीपे कुर्य्यात्।

एतेनैतदुक्तं भवति—

एकादश्यां दशपिण्डदानमुपवासश्च सायंसमये ब्राह्मणा-मन्त्रणञ्च द्वादश्यां मध्याह्नात्पूर्व्वं विष्णुपूजां कृत्वा मध्याह्ने श्राद्धं कार्य्यम्।

पितृपुत्रमिति—पिता च पुत्रश्च इति समाहारद्वन्द्वः अत्र हि पितुः पितामहस्य च श्राद्धं कर्त्तव्यमित्युक्तम्।

अत्र पितामहः स्वपितुः पिता भवति स्वपिता च पिता-महस्य पुत्रः तेन पितामहं पितरञ्च स्मरन्नित्युक्तं भवति। ब्राह्मणतृप्तेः पूर्व्वं गृह्यादिभिः श्राद्धसम्बन्धि यदनुष्ठेयमुक्तं तद्दैव-पूर्व्वमाचरेदित्यर्थः।

एतेन विश्वदेवश्राद्धार्थं ब्राह्मणद्वयस्यामन्त्रणं दर्शितं देवरूप-मनुस्मरन्निति यस्य देवस्य यः पिण्डो दीयते शक्त्यनुरूपं तस्य रूपं ध्यात्वा देय इत्यर्थः।

परिवारायेति—परिवारसहिताय यमायेत्यर्थः। मृतं सङ्गी-

र्थ्येति मृतस्य गोत्रनामनी बुद्धौ कर्त्तव्ये न तूच्चारणीये। विष्णोस्तु नामोच्चारणीयमेव। पूर्व्ववदिति विष्णुं ध्यात्वेत्यर्थः।

एकं वृद्धतममिति—भोजितेषु ब्राह्मणेषु मध्ये एकं सर्व्वज्येष्ठमित्यर्थः। प्रेतस्य मनसेत्यत्र स्मृत्यर्थे कर्म्मणि षष्ठी प्रेतं स्मरन्नित्यर्थः। ततः सर्व्वे एव भोजिता विप्रास्तिलमिश्रमम्भस्तिलसहितमेव दर्भैः सह गृहीत्वा मृतस्य गोत्रनामनी बुद्धिस्थीकृत्य भूमौ क्षिपेयुः।

ततः श्राद्धकर्त्ता गृहाद्बहिर्निःसृत्य तिलोदकं प्रेताय दद्यात्। आत्मघातिन इत्यभिधानात् आत्मघातकमात्रस्यैवेदं विधानं न तु महापातक्यादीनामिति दर्शयति।

विष्णुः,—

गोब्राह्मणहतानाञ्च पतितानान्तथैव च।
ऊर्द्ध्वं संवत्सरात् कुर्य्यात् सर्व्वमेवौर्द्ध्वदेहिकम्॥

एतच्च देशविशेषव्यवस्थितमित्यादिपुराणवचन एवोक्तं न तु दास्या घटतोयदान-नारायणबलिदानयोः प्रथमसंवत्सराभ्यन्तरविषयत्वम् व्यवस्थाप्यम्[1]।

देशधर्म्मप्रमाणत्वादित्यस्य चादिपुराणवचनस्य च गयाकूपमार्त्तण्डपादपमूलैकतरदेशनियममात्रपरत्वमभ्युपगम्य ऊर्द्ध्वं संवत्सरादित्यस्य सर्व्वदेशधर्म्मत्वं युक्तं न हि संवत्सरातिक्रमः पतितत्वमपनयति प्राणान्तिकादिप्रायश्चित्तवैयर्थ्यप्रसङ्गात्।

(१) क अधिकः पाठः।

तेन संवत्सरोपरि और्द्धदेहिककरणं कथं तत्तत्कृच्छ्रद्वयापनेयं पापं न नाशयेत् अतो देशविशेषव्यवस्थितत्वमेव युक्तम्।

अतएवादिपुराणवचने क्वचिद्देशे क्रियते इति परम्परया प्राप्तमनुष्ठानमनुदितं मातुलकन्यापरिणयनादिवत्।

यदपि विष्णुवचने कुर्य्यादित्युक्तं तदपि देशविशेषवासिसमस्तजनानुष्ठीयमानानां परम्परया प्राप्तानामाचाराणां[1] नृपतेरवारणीयत्वात् प्रजोद्वेगनिवृत्त्यर्थं कर्त्तव्यताभ्यनुज्ञानम्।

अतएव प्राच्यदाक्षिणात्योदीच्यदेशव्यवस्थिताऽनाचारविशेषानुदाहृत्य बृहस्पतिनोक्तम्।

अनेन कर्म्मणा नैते प्रायश्चित्तदयावहाः।
विहिताकरणात् किन्तु प्रतिषिद्धनिषेवणात्।
भक्ताच्छादं प्रदायैषां शेषं गृह्णीत पार्थिवः॥

इति यत् निषिद्धक्रियानिवृत्तिहेतू प्रायश्चित्त—दण्डौ तत् परम्पराप्राप्त(ना)चारकरणे सति न कार्य्यौ तादृशस्यानाचारस्य निवर्त्तने प्रजासंक्षोभप्रसङ्गात्।

अत[2]स्तादृशमाचारमनुपाल्य स्वकुटुम्बभक्ताच्छादनादधिकं सर्व्वस्वं नृपतिना ग्राह्यमित्युक्तम्।

गोतमः—

यस्य प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत तस्मिन्नुदकादीनि प्रेतकर्म्माणि कुर्य्युः।

---

(१) क ग अनाचाराणाम्।

(२) घ तादृशममाचारम्।

प्राणान्तिकप्रायश्चित्तानुष्ठानात् [1]स्वयं मृतस्य शुद्धत्वात् सर्व्वं प्रेतकार्य्यं कर्त्तव्यमित्यर्थः ।

अनेनैवाप्यशुद्धस्य न कार्य्यमित्युक्तम् । अतः कथमविशुद्धस्यैवात्मघातिनोऽपि संवत्सरोपरि क्रियते । इति ।

सुरापगातीरविहारपाटके[2]
निवासिना भट्टनयार्थवेदिना ।
कृताऽनिरुद्धेन सतामुरःस्थले
विराजतां हारलतेयमर्पिता ॥

इति चाम्पाहट्टीयमहोपाध्यायधर्म्माध्यक्षश्रीमदनिरुद्ध-
विरचिताऽशौचव्यवस्था हारलता समाप्ता ।

ॐ रामः ।

सम्पूर्णोऽयं ग्रन्थः ।

ॐ तत्सत् ।

---

(१) ख तस्य ।
(२) ख पट्टके ।

